# दिशा विदिशा

(लघुकथासंग्रहः)



विदुन्मणिः

डॉ० केशवचन्द्रदाशः

लोकभाषाप्रचारसमितिः, पुरी

विद्वद्भू
डा॰ सत्यव्र
महोदयेभ्यः
केश

# दिशा विदिशा

## (लघुकथासंग्रहः)




विद्वन्मणिः

**डॉ॰ केशवचन्द्रदाशः**

**लोकभाषाप्रचारसमितिः, पुरी**

# दिशा विदिशा

(लघुकथासंग्रहः)

प्रणेता
विद्वन्मणिः
**डॉ० केशवचन्द्रदाशः**
प्राध्यापकः,
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः
श्रीविहारः, पुरी-752002,

प्रकाशिका
**लोकभाषाप्रचारसमितिः,**
वड ओडिआ मठः
पुरी-752001।



प्रथमसंस्करणम्
1988

**श्री नारायण प्रेस्**
बालिसाहि, पुरी

मूल्यम्, रू 10/—

# विषयसूची

—x—

# आत्मनेपदी

अहं छत्रं धरामि । छत्रस्य छायां सम्यक् अनुभवामि । परमस्मिन् छायातले शीतलता कुत्र ? परितः प्रचण्डतापः । अहं च परिच्छिन्ना । यद्यपि छत्रं मे निश्चलं यद्यपि च अहं स्थिरा, तथापि छाया गतिवाहिनी । आसु एव चलच्छायासु ऋतव आगताः । मयि तिरोहिताः । ऋतुनदी सेतुपर्यन्तमपि आगन्तुं समर्था नाभूत् --- ।

अहमेकस्मिन् स्रोतसि दण्डायमाना । स्रोतो मां परिक्रम्य अतिक्रम्य च वहति । न जाने कुतोऽस्य प्रभवः कुत्र वा सङ्गमः । अहं तु अस्य वहनमेव अनुभवामि । अस्य आवर्तमयजलराशिः देहे मे आवर्तानि सृजति । परस्पर प्रशंसार्थं यदा आवर्तानामेकाकारता तदा इदं स्रोतः मम पादतलात् मृत्तिकां क्षालयति । अहम् अन्तर्निमज्जामि । ततः किं भवति ज्ञातुं न शक्नोमि ----

अहमेका प्रीतिमयी लता । किन्तु ते वदन्ति— अहं विषधरी --- दहनदंशनयोः भोगायनी । अहं भोगवती लता यस्याः छाया सदा प्रतारिका । अहम् उत्तृषा नदी यत्र उपनदः निर्नामा भवति । परमहमनुभवामि— आषाढपादपे अहमेका बलकावसतिः ।

------ न व्यसनं किन्तु मनाग् विश्राममिच्छामि । तत्र– यत्र धूलिः नास्ति, पाषाणोऽपि नास्ति··· यत्र शीताधिक्यं नास्ति, तापप्राबल्यमपि नास्ति··· तदेव संज्ञाहीनमभयारण्यम् । शीतलगीतिका अस्य प्राणनेत्री । गीतेऽस्मिन् श्लेषाश्लेषयोः अर्थः सत्यमयः । अस्य सर्वत्र समानप्रतिध्वनिः "एहि आत्मानं पुनीमहे"···

अहं ऋतावरी··· पुनश्च ऋतंभरा । ऋतुमयनारीत्वे अहमुच्छला उत्पूर्ता च । रुधिरं मे शिशुमयम् । अतः अश्रु-तृषा-प्रतीक्षासु अहम् आयुष्मती । अहमनुरक्ता मम प्रतिफलनेषु··· मम प्रतिच्छविषु··· मम प्रतिकृतिषु···

स्थिरस्थविरविन्दुनिमित्तम् अहमिह चिरहरिता··· । रुग्णायनेऽस्मिन् को वा अरोगी ? अनावृत्तजघननिमित्तं त्वं काले काले मृदुरोगी । अहमपि एतन्निह्नूय चिराय मधुरयन्त्रणाकांक्षिणी । अतः स्तोकमहं मन्दतिमिरमिच्छामि । क्षणमपि अदेहम्पश्या भवितुमिच्छामि । मनागपि निमीलन-पक्ष्मा भवितुमिच्छामि ।

परमद्य अहं वह्निमती । मनसि मे शीर्णदारु । अस्य पाषाणी शाखाद्वयी नभश्चुम्बिनी । वक्रा एका शाखा । अपरा सरलाऽपि अग्रकुटिला । उभयं च निश्चर्मम् ।

गणभाग्याऽपि छाया मत्कृते अपशैत्या। अहमस्यास्तले अशब्द बागम्बरी। स्वप्नान्तराले मे··· कति नाटकीय चरित्राणां नेपथ्यरतिः ··· चन्द्रमध्यस्थनीरवसमुद्रस्य आयुर्गस्ता लहरी ··· आज्यमादितः ऋतूपागमः ---- कतिपय कुण्ठततूं नाम् अस्फुटगन्धः ----।

अद्याऽहं पश्यामि— ममाग्रे मन्दिरस्य पताका अपरक्ता भवति। चूड़ायां कलकण्ठीमपेक्ष्य वायसो नीलकण्ठो भवति। अपूज्यचत्वरे छागी वलिनिमित्तम् आत्मानं प्रस्तौति अत्र नेतिकारस्य अवसरो विरलः। केवलमुदास्वीकारः --- निरुपायः ----- अङ्गीकारः ----।

# पदातिकः

सरीसृपस्य आप्रणचेष्टा– प्रतिकूलस्रोतस्यपि स घासमूलं धृत्वा कियत्कालं विश्रमिष्यति। शक्तिम् आहरिष्यति। पुनः प्रतितरिष्यति। स्रोतोवेगः नूनं विरमिष्यति। अतोऽस्य विभीष-क्षणस्य कृते नेत्रनिमीलनं सकृत् वरं भविष्यति। किन्तु निमीलनमिदं महानिद्रा न भविष्यति नु ? — मूत्रस्रोतसः धारः क्रमशः शुष्यति। सरीसृपः तस्मिन् पूर्ववत् सुप्तः। तस्य हस्तयुगं पूर्ववत् घासमूलबद्धम्। स्रोतो विरतम्। तथापि निद्रा न गच्छति। ----विपिन् एकाग्रतया पश्यति—

एकदा भरतपुत्रा इत्थं कतिजलधारेषु तरीपताकामुत्तोलितवन्तः। नौनैपुण्यमायत्तवन्तः दूरदूरान्तमाविष्कृत्य इत्थं कतिषु कूलेषु सभ्यतां निर्मापितवन्तः। ततो नदीसभ्यतायाः प्रसारः संजातः। सीमन्तिनी सभ्या अभूत्। सभ्यतायाः शिरसि उपविश्य तीरेऽस्मिन् सा बहुवर्षाणि प्रतीक्षमाणा आसीत्। आवेग-मादकता-श्रद्धा-प्रभृतिषु सा पुनः विजयपताकाम् अवलोकयन्ती आसीत। परमिदं स्रोत उत्कूलमभूत्। सभ्यता लुप्ता। जीवनार्थं समरस्य अवसानमभूत्।

तद्दिने जीवनार्थं युद्धमभूत्। अद्य तु मरणाय युद्धम्। मारणास्त्रनिर्माणाय स्पर्धा ---- सदैव मारण-मरणचिन्ता। किन्तु कुत्र तत् मारणास्त्रम्? वन्या, वात्या, भूकम्पः-एतेषां मारणनिमित्तम् अस्त्रं कुत्र? मृत्युः अस्मासु एव वृद्धः ---- जातस्य सहचरः।

भग्नसेतूपरि दण्डायमानो विपिन निजग्रामं परि-चिनोति-सर्वत्र समतलम्। केवलो बालुकाराशिः। वृक्षा बहुदूरे एकीभूताः। सीमाप्राचीरं निश्चिह्नम। ग्राममन्दिरस्य शिलाः केवलमितस्ततो दृश्यन्ते। कुत्र तस्य वसतिः तन्निश्चेतुं न शक्यते। शवाः पूयन्ते। काका आकाशे चक्रायन्ते। विपिन जीवित इत्येव तस्य मरुखरीधा आत्मतृप्तिः।

नदी क्लान्त्या शान्ता। सर्वत्र तु हतश्रीदृश्यम्। बहुदूरं गन्तुमिच्छन् विपिन प्रथमतो निर्गतः। परं गन्तुं न शक्नोति। नेत्रे तस्य अश्रु। हृदये बाष्पम्। विपिन् क्षणं तलमपश्यत। सरीसृपः तथैव पतन् वर्तते। मूत्रं शुष्कम्। वामहस्तेन तं धृत्वा उदस्थापयद विपिन। किंतु सरीसृपयस्य पाणिपादं पूर्ववत् घासमूलधारणमुद्रया जडीभूतम्। विपिन् सं परित्यज्य अत्वमवत्-प्रलयः समाप्तः। वन्या हतवेगा।

विनिन् सेतुतः समतलप्रदेशम् अभ्यधावत् । आर्द्रबालुकासु तस्य पादचिह्नं सुस्पष्टम् । एकस्मिन् प्रदेशे स्थित्वा परितः स विलोकितवान् । बालुकोपरि अङ्गुल्या निजगृहसीमामङ्कयन् रेखां व्यरचयत् । इतस्ततो गमनागमनेन बालुकायां नैकानि पादचिह्नानि अङ्कितानि । किन्तु सीमारेखा पादचिह्नद्वारा लुप्ता नासीत् ।

—o—

## अवशिष्टम् अश्रु

प्रायः ··· इत्थं यन्त्रणायां चीत्कृत्य, विलप्य, प्रलप्य, अनुतप्य च त्वं नरकं गमिष्यसि । अहं च मम आत्मकथां श्रावयन् वातुलो भविष्यामि । यदा च रजनी अयास्यति तदा तालपत्रव्यजनीं धृत्वा सन्तानद्वयस्य मध्ये उपविश्य अवश्यं स्मरिष्यामि पिता मे कीदृशं मम प्रथमजन्मदिनं पालितवान् ? कियान् प्रमोदी आसीत् ? ततः तव अस्थिखण्डानि धृत्वा गङ्गातीरं गमिष्यामि ।



तत्र शुभं मनस्यन् वदिष्यामि—"अन्ततः त्वं नरके शान्तिं

लभस्व" । ततः तव प्रतिकृतिं गृहे संस्थाप्य, समये समये च तदुपरि माल्यं समर्प्य वदिष्यामि— "क्रमशः त्वां विस्मर्तुमारभे । अतः मम मुद्रिकायाम् अथवा हारस्य मुख्य ग्रन्थिमध्ये तव लघुचित्रं निवेशयामि ।" ततः मुद्रिका कुत्र पतिष्यति । हारं च चौरः नेष्यति ।

ततः अपकृतेः प्रायश्चित्ताय काश्यां स्नानं करिष्यामि । बद्रिकायां दानं करिष्यमि । पुरीं गत्वा दक्षिणां दास्यामि । महोदधौ तव शेषकेशं निपात्य शेषस्नानं विधाय प्रत्यागमिष्यामि ।

तदनु प्रारब्धं भविष्यति सन्ततेः कार्यम् । तदाऽहं किं करिष्यामि ? वृद्धनिवासे केवलमात्मप्रौढिम् उदाहृत्य उपहासमामन्त्रयिष्यामि । सर्वाङ्गे पापानि विचरिष्यन्ति । निष्ठुरता मां कुष्ठीकरिष्यति ।

किन्तु किं त्वया लब्धम् ? प्रश्नेऽस्मिन् चेखिद्यते मनो मे । विपरीतप्रवाहे त्वया संतरणं कृतम । अपमान-मङ्गीकृतम् । अपवाद आत्मसात्कृतः । देहो धुनीकृतः । परं किं फलमभूत् ?

तत आविष्करिष्यामि तव वेदनां सन्ततीनां



विरक्तितः --- क्षुधातः तव आत्मसत्तामि --- तृप्तितः

तव तृषाम् --- रतितः तव अभिशापम् - -- सुखनिद्रातः आवयोः पीडितमिलनहृदयम् ।

: अद्य उपरि श्वेतजलदा भ्रमन्ति । एषां छाया नास्ति ··· वर्षणसम्भावनाऽपि नास्ति । तथापि ते कथं भ्रमन्ति ? एतदपि चिन्तयितुं न शक्नोमि । तथापि एतान् पश्यामि । एतावां गतिः, पार्वत्यप्रवृत्तिश्च मां विचली करोति । अहं तु मलं मे निह्नूय मध्याह्नमार्जार इव दृष्टिं संकोचयन् प्रतीक्षे । त्वं च मम आकुञ्चामयसे ।

अहं सन्यासी भवितुम अथवा देशसेवी भवितुं न शक्नोमि । अद्य हि मन्निकटे छलना नास्ति । न वा कापट्यमभ्यस्तम् । उच्चपदाधीकारी अवश्यमभविष्यम् । किं तु पूर्वजानां मे प्रतारिका बुद्धिर्नासीत् तथापीदानीं ते प्रभावः अनुभूयते । अतस्तव जयगानार्थम् उत्सहे । परं जयकारस्य कति निर्धारितशब्दाः न मुखस्थाः ।

: पुनः जन्मलाभाय अवश्यं सुयोगो लभ्येत । किंतु जन्मतः परं तव न कम्पनं न वा क्रन्दनं भवतु । अतः अण्ड-रूपेण जनुर्लभस्व तिष्ठ च—इति मे शुभेच्छा । मत्कृते तु अन्यत् किमपि न सम्भवम् । अहं तदेव द्रव्यम्— यस्मात् यत् नीयतां नाम तस्य वृद्धिः अवश्यम्भाविनी । तदेव केवलम्



--- सुषिरं--- विवरं- --बिलम्--- ।

# हाँ........

सा चिन्तयन्ती आसीत्–विवाहः अभूत् । एका उत्तेजना समाप्ता । परं---, कन्या जाता इति मानसिक-सन्तुलनं नष्टम् । ततः पुत्रो जातः । मानसीकी स्थितिः स्थिरा । पतिः उद्योगी । साऽपि वृत्तिवाहिनी । उभौ उपार्जयतः । अतः न काऽपि आर्थिकी असुविधा भाविनिकाले भविष्यति ।

पतिः विवाहस्य प्रथमवर्षे बहु प्रतिश्रुतवान । परमेकमपि न पालितवान । अधुना यदि सा पृच्छति तर्हि स वदति–'अये ! मम मनसि तु न किमपि वर्तते । किमर्थं नाहं स्मारितः ?' सा अस्य मनोवृत्तम् आकलय्य आक्षिपति –'भवान् तु सदा तमसि' । का जननी ? का च जाया ? वषयेऽस्मिन् भवतो ज्ञानमपि नास्ति । कदा ज्ञानोदयो भवेत् ?

अन्यत् किमपि आक्षेप्तुं समयो न मिलति ।

सेवावृत्तिः दिवसम् आवृणोति ।

सायं चायपानावसरे केवलं कतिपदानाम् आलापः । इमं च बालद्वयस्य कोलाहलः मध्ये मध्ये विरमयति । रात्रिः

अधिका भविष्यति इति सा पाकशालां प्रविशति । अयं तु पिशाचकथां वर्णयन् बालकद्वयं शाययति । स्वयमपि स्वपिति श्वस्तन-कार्यालयगमन मनस्यन् ।

धात्री बहिः कर्माणि करोति । मध्ये मध्ये शब्दापयति । — बाबो ! सुप्तः किम् ? इतः प्रतिदिनं माता कुप्यति । भवान् तथापि न शृणोति ?

तदा तु बाबुः गभीरनिद्रापायी । धात्री सान्त्वनाया बाबु पत्नी श्वावसन्तीव आत्मानं जल्पति ।

—'हाँ···, कार्यालये निरतं परिश्रम्य बाबुः क्लान्तः । इदं तु गृहम् । अत्र यदि न शयीत कुत्र वा शयीत ?

ततो भोजनं सज्जीकृत्य बाबुपत्नी संबोधयति ।

—— ये··· ! एहि, नु··· !

अभ्यस्तकरस्पर्शं संप्राप्य बाबुः तत्क्षणं च निद्रां त्यजति । शीघ्रं भुङ्क्त्वा शय्यामाश्रयते ।

निजभोजनं समाप्य यदा सा शयनकक्षं प्रविशति तदा पश्यति—शय्या असज्जा । शय्यायाः



एकपार्श्वे यदि पुत्रो निद्रापतितः तर्हि अपरकोणे कन्या

बाबुश्च शय्याधारे । सा सज्जीकरोति । सर्वान् यथास्थानं स्थापयति । उभयस्य लघुसेवा वृत्तिं चिन्तयति । पत्युः क्लान्ततां समीक्ष्य हसति । आलस्यं च निन्दति । तस्य मुखमवलोक्य आत्मानं वदति—'अहं यदि अत्र न स्याम् …भवतो निद्राऽपि न स्यात् । ततः सा श्वस्तनं विभाव्य दीपं निर्वापयति ।

सा स्वपिति । मनसि तस्याः पत्युः पूर्वप्रतिश्रुतिः—
"त्वदर्थं सर्वं करिष्यामि" । प्रतिप्रश्नं च तस्य उत्तरं केवलो 'हुँ-कारः' ।

—भवान् इत्थं करोतु

—हुँ…,

—भवान् इदमानयतु,

—हाँ…,

साऽपि अधुना तथा अभ्यस्यति । यदा कन्या याचते

—मातः ! पुस्तकमानेष्यसि ।

—हाँ…

—पुत्रो वदति ।



—मातः ! क्रीडनकमानय !

—...हँ...

यदा उभयस्य कलहो भवति तदा सा लघुकथा-मुदाहरति। उभयं बोधयति। ततः सुन्दरी भवति उभय-मुखे 'हँ-कार'-श्रीः। हँ-भरस्वरः निद्रामनुनयति। हँ-कारेण सा दीर्घं निःश्वसिति। हँ-कारे संसारः स्वपिति। सा च नयनं पिधत्ते। 'हँ-कारः' श्वस्तनस्य अहंकारे निमज्जति।

—*—

# सरसी

न कोऽपि अत्र शिलां न्यस्तवान्। न वा कश्चित् विशिष्टातिथिः दीपं दीपयन् इदमुद्घाटयत्। इदमासीत् गोष्पदपुष्करम्- - - - - - त्रिंशद बर्षेभ्यः प्राक्। अस्य सर्वत्र तटमासीत्। अधुनाऽपि वर्त्तते। जना अवगाहन्ते। सूर्याय जलमर्पयन्ति। शिवार्पणमस्तु- - - शिवार्पणमस्तु - - - - - - इति निगद्य बहिर्यान्ति।

हरिः अद्य वृद्धः । तस्य तु तदेव अस्त्रम्...
खर्परम् । इदमेव तस्य आदिखनित्रम् । अनेन स पुष्करं पल्वलीकृतवान् । वृष्टिः तस्य ऋतुसहचरी । शीते---ग्रीष्मे--- अन्यदा--- सदा च स वृष्टिमनुभवति । तस्य देहतः स्वेदकणिका एव पल्वलं निर्मितवती । हरिः विहस्य वदति–जलमिह कुत्र ? इयं तु स्वेदकणिका ।

अद्यत्वे यस्य कृतिर्नास्ति स एव कर्मी । तस्य प्रशंसा निमित्तं सभा भवति । सदा च स्नेहसम्मेलनमायोज्यते । परमत्र हरिं कः प्रशंसेत् ? ये अत्रागम्य अवगाहन्ते ते केवलमाशीर्वदन्ति--- मंगलं कामयन्ते– भगवान् तस्य मङ्गलं करोतु । अद्यापि हरिः पल्वलं सरसीकर्तुं यतते । नूनमत्र स किंचित् करिष्यति। यदा तस्य बाल्यबन्धुः गोविन्दः पृच्छति ––अरे ! परिश्रमेण को वा लाभः ? त्रिंशद् वर्षाणि गतानि । पल्वलं पुष्करिणी अभूत् । पुनः किमवशिष्यते कर्तुं वयसि अस्मिन् ? अद्यत्वे तु सर्वे सभ्याः सयाताः । गृहे तु सर्वेषां स्नानागाराः । को वाऽत्र आगमिष्यति ?

तदा स उत्तरति

——अरे, गोविन्द ! संसारे बहवो । जीवाः सन्ति । सर्वे किं स्नानागारं वा नदीं वा समुद्रं यातुं शक्नुवन्ति ? पुनश्च बहिःस्नानम् अस्माकं बाल्याभ्यासः । किं वा करिष्यामः ? कूले च वृक्षा रोपिताः, एषां छाया किं न शान्तिदायिनी ?

——अरे ! अस्माकं का कथा ?

——तर्हि केषां विषये वदसि ?

——ये सभ्या अत्र आगच्छन्ति

ते तु युगसभ्याः ।

—सभ्याः ? कः पिता···को वा माता एतेषाम् ? अस्माकं समये किं नासीत् ? एकमेव गृहम् । तस्य द्वार-द्वयम् । अग्रद्वारे पिता रक्षी । पश्चद्वारे माता च रक्षिणी । वातो वहतु वा झञ्जा वहतु । गृहे किमपि प्रवेष्टुं न समर्थम् । अद्य तु सर्वमुनमुक्तम् । गृहं पान्थशाला । भोजनं पादपथापणे । मरणं रुग्णालये । एषां शिक्षा कुत्र ? त्वमिह पुष्करं सरसीकरणे वृद्धः संजातः । तथापि ते आत्मदैन्यं नास्ति । परमेतेषां का कथा ? यदि एषां चेष्टा स्यात् तर्हि इत्थं कति न बलानि नाभिभवन ?

यदि वा नाभूत् तथापि अस्याः रक्षणं किमेतेषां कर्त्तव्यं नास्ति ?

——अरे ! त्वं न जानासि युगोऽयं कीदृशः ? अद्यत्वे शिशुः भोजनं न प्राप्नोति । किंतु समाधितः वृद्धस्य अस्थिखोदनाय पर्याप्तं धनं व्ययीभवति । युगोऽयम् अस्थिरङ्कः ।

——तर्हि, मरणोत्तरं सर्वं भवति । यदा सरसी सेतुना सह समतला भविष्यति तदा एते आगत्य अत्र वृद्धहरिं स्मरिष्यन्ति । नहि··· ?

——न जाने, मत्तः परं किमिह भविष्यति ? उत्साहो वर्त्तते इति इदानीमपि मे निर्माणप्रवृत्तिरस्ति । मम विश्वासो वर्त्तते– यावत् खोद्येत नूनं तावत् निर्मल जलम् आविर्भवेत् । जीवाश्च पास्यन्ति ।

——भवतु··· । सर्वम् उपरिसः पश्यति ।

संध्या कम्रा नम्रा च आसीत्

—*—

# भाटकीयम्

लुमामाता पुष्पवृक्षं विलोक्य विरक्तभावेन

अवदत्,

——यदा प्रभृति एते आगता वृक्षे पुष्पं न तिष्ठति। कुन्तले स्थापनाय पुष्पमेकं न मिलति। अद्यत्वे भाटकिनः चिन्तयन्ति—वृक्षः तेषाम्--- फलं तेषाम्--- पुष्पं तेषां--- सर्वं च तेषाम्। भाटकिनां साहसस्तु अनुदिनं वर्धते।

रचना मालिकपत्न्या इत्थं बहिर्जल्पनं श्रुत्वा

गृहात् निर्गम्य उदतरत्।

——इष्टपूजार्थं पतिः मे पुष्पमचिनोत्। यद्यत्र दोषः तर्हि श्वःप्रभृति तस्य चयनं वारयिष्यामि।

——युष्माकं भाटकिनां साहस उत्कटः संयातः। यत् यत्र प्राप्यते तत् सर्वमात्मसात् क्रियते युष्माभिः। अत्र उच्छिष्टं --- तत्र वर्जितम् --- एवं सर्वम् इतस्ततो निक्षिप्य गृहमिदं नाशितम्। किं चित्यते युष्माभिः?

गृहं निर्मितं किं युष्माकं लीलार्थम् ? यथेच्छं यत् किमपि क्रियेत ?

—नहि, मातः ! शिशुबालकानां वास इह। नूनं मनाक् अपरिष्कृतं भवेत्। तथापि अस्माकं सौन्दर्यदृष्टिरस्ति। सदा गृहं परिष्क्रियते। अन्यथा बालेषु रोगः प्रादुर्भवेत्। वयं तु न पशवः, यथेच्छं करिष्यामहे----

—परं सावधानतया वचो मे शृणु-श्वः प्रभृति वृक्षतः पुष्पं पत्रं वा न चेतव्यम्।

इत्थं मालिकपत्नी प्रतिदिनं वदति। रचना च कलहलिप्ता भवति। तथापि पतिसमीपे न वदति। सा अनुभवति- अद्यत्वे भाटकीयमाधिपत्यं प्रबलम्। गृहमालिकाः पशुवद् व्यवहरन्ति। किं वा करिष्यते ? सर्वकारसेवावृत्तिः क्रियते इति अवश्यं कुत्र स्थातव्यम्। सर्वकारस्य तु प्रतिवर्षं धनागमो ह्रस्यते इति वार्ता। प्रतिदिनं ऋणं विदेशेभ्यः। सेवकान् केन प्रकारेण वा गृहाणि वितरिष्यति। रचना प्रतिदिनं चिन्तयति- नूनमिदं गृहं परित्यक्तव्यम्। परं कुत्र निवत्स्यति ?

तद्रात्रौ गृहमालिकः समागतः। तस्य पत्नी तं न्यवेदयत्।

—त्वं तु न किमपि तान् वदति । ते यथेच्छमाचरन्ति । गृहं मे नष्टं भ्रष्टं परिलक्ष्यते ।

गृहमालिकः सत्वरमागम्य रचनां तस्याः पतिं च आहूय अवदत् ।

—यदि इत्थं क्रियेत तर्हि श्वः प्रभृति गृहमिदं परित्यज्य अन्यत्र गम्यताम् ।

रचना निरुपाया । पतिरपि व्यग्रः । तथापि दिष्टया दिवसद्वयेन अन्विष्य अन्विष्य गृहं प्राप्नोत् । रचना नरकतः नरकान्तरं गतवती ।

इदानीमन्ये भाटकिनः समायाताः ।

लुमामाता अपश्यत्—पूर्ववत् वृक्षे पुष्पाणि न तिष्ठन्ति । सा नितरां कुपिताऽभूत् असाधुरीत्या आक्षिपत । तान् च अभर्त्संयत् । ततः भाटकी आगत्य सरोषम् अवदत् ।

—एवं न वक्तव्यम् । कुत्र पुष्पं क्व वा फलं वयं न जानीमहे । प्रत्यूषे प्रतिवेशिबालका वृक्षमारोहन्ति । प्रकारे च स्थित्वा पुष्पाणि चिन्वन्ति । ते तु सदा भवदीयप्रतिवेशिनः । तान् पृच्छतु । अकारणं कथमस्मान् आक्षिपति ?

लुमामाता नवभाटकिनः कोपं दृष्ट्वा किंचित् अवनता। अवनतस्वरेण तथापि अभर्त्संयत्।

—एते मिथ्यावादिनः। तमश्छन्नप्रभाते पुष्पाणि फलानि च चोरयन्ति। प्रतिवेशिनाम्ना आत्मोद्धारं कुर्वन्ति।

एकदा मार्गेऽस्मिन् रचना गृहं प्रत्यागता आसीत्। सा अपश्यत्—तमेव वृक्षं बलीवर्दा नाशयन्ति। प्राकारे वृक्षमारुह्य छागाः पत्राणि भक्षयन्ति। दृश्य-मसहमाना रचना लुमामातरं समबोधयत्।

—मातः! वृक्षो नष्टः··· वृक्षो नष्टः···

लुमामाता गृहात् निर्गम्य उदासीनतया अवदत्।

—नश्यतु···। भाटकिनां दृष्टिः यत्र पतति तद नश्यति एव। अहं तु वृक्षात् न किमपि प्राप्नोमि। नाशस्तस्य वरमेव।

—०—

## दूरस्थलोतके

प्रणयिन् !

प्रणामः । पत्रमधिगतम् । सर्वमत्र यथादृष्टम् । आशासे भवान् तत्र कुशली ।

असिमानेन गृहात् निर्गतम् । वसनमपि न नीतम् । स तु पार्वत्यप्रदेशः । तत्र शैत्यं प्रबलम् । तदर्थमपि गृहात् किमपि नेतुं विस्मृतवान् । एतदर्थम् अहमिह व्याकुला । विदेशे को वा सहायो भविष्यति ? भवन्निकटे रूप्यकाणि अपि न पर्याप्तानि । विपणीतः सर्वं क्रेतुं न शक्यते । केनोपायेन वा दिवसान् नेष्यति ? वचनं मे उपेक्षितम् । किमपि न श्रुतम् । यथा आगतवान् तथा गतवान् ।

मयि भवान् कुपितः । को वा मम दोषः ? विवाहात् परं वर्षचतुष्टयं गतम् । कस्मिन् दिनेऽपि किमपि आनेतुं नोक्तं मया । न आभरणम्, न वा शाटीकाम्··· । किन्तु तद् दिने पुष्पमेकमानीय कुन्तले मे स्थापयितुम् उक्तवती । भवता विस्मृतम् । एतन् मया तदानीं कथितम् । परं कथामिमाम् अन्यथा चिन्तयित्वा

भवान् अभिमानेन प्रस्थितवान् । तदनु मां भवान् अन्यथा चिन्तयति । पश्यतु, भवतः प्रेम, अनाविलममत्वं च मत्कृते पर्याप्तम् । नान्यत् किमपि इच्छामि । किन्तु तद्दिने किंचित् नावगम्य भवता अभिमानं कृतम् । नैतत् समीचीनम् ।

पश्यतु, वर्षचतुष्टयं गतम् । सदैव दूरेऽहम् अवस्थिता··· चिरविरहिणी···। अहं मनुष्यः । ममाऽपि मनः अस्ति । भवन्तं विहाय कं वा मनः कथां वदामि ? परं भवान् न कदाचित् मया सह एकत्र अवस्थातुमिच्छति । सर्वदा वदति–परिस्थितिः न अनुकूला । अहं भवता सहवस्तुं कियद् व्याकुला भवान् केन प्रकारेण वा विजानीयात् ? अथवा मयि भवान् असन्तुष्टः ? भवेत्, मम रूपं नास्ति । गुणा अपि न सन्ति । न वा मांसल-सौन्दर्यमस्ति । कया रीत्या वा भवन्तं प्रभावयितुं शक्नोमि ? तथापि मनो मे भवादृशं भवितुं न शक्नोति । सदाऽहं भवतो हितं कामये । भवतः प्रगतये च देवान् पूजयामि । मम इच्छा वर्त्तते–यद्यहं सर्वतोऽसमर्था तथापि भवन्निकटे वर्त्तमाना निजहस्तेन अन्नं प्रस्तूय भोजयिष्यामि । अथवा ··· भवान् अस्मिन्नपि कर्मणि असन्तुष्टः ?

पश्यतु, पैसा न कदापि मनसि शान्तिमानेतुं प्रभवति। इत्थम् अवस्थाने च अस्माकं लघुसंसारो न कदा सुखी भविष्यति। यदि भवान् चिन्तयति–नाऽहं भवतः। अहं परा। तथापि इत्थमहं चिन्तयितुं न शक्नोमि। भवतः समीपे यदि काचसिन्दूरविभूषिताया मे जीवनं प्रयास्यति तदेव मत्कृते चिरमुक्तिः।

इदानीं कन्या यं कमपि 'पितः!' सम्बोधयति। इङ्गितेन दर्शयति। भवान् तु निकटे नास्ति। किमपि न शृणोति। किंचित न पश्यति। किमपि न जानाति। परमहं सोढुं न शक्नोमि। मम कथा मानसं नागता इति न मे खेदः। किंतु कन्याविषयमपि न स्मरति भवान्? अहं चिन्तिता आसम्–पितुः व्यवहारेण कन्या यदि प्रभाविता भवेत् तर्हि नूनमधिका बुद्धिमती भविष्यति। किंतु सर्वं वृथा। मम नेत्रतो लोतकं न कदाचित् समाप्ता भविष्यति।

अधिकं लिखितम्। विरक्तो न भविता। सम्यक् चिन्तयिष्यति। अहमिह उत्कण्ठिता। शीघ्रमेव पत्रं प्रेषणीयम्। प्रतीक्षायाम्......

भवतः



"अहम्" (शशिरेखा)

# अस्थायिचित्रम्

## ( १ )

नारीकेलपत्राणि स्थिराणि । वर्षुको मेघ इदानीमेव गतः । वृष्टिस्नानात् परं पत्राणि सूर्यस्य स्वर्णिमरश्मिषु पुनरवगाहन्ते । वृक्षद्वयस्य अन्तराले इन्द्रधनुः शोभामाहरति । स्नानोत्थितबालका इव लघुतरवो मुखात् जलमपसारयन्ति । नासातः तेषां मेघः विन्दुभूय अवतरति । पत्राणि श्यामस्वर्णवर्णेन अद्भूतानि ।

निःसङ्गतया उपविष्टा शून्यमानसा पद्मा । श्यामस्वर्णिमदृश्यं तस्या मनसि पूर्णप्रतिविम्बं अजनयत् । नेत्रं तस्या मेघाक्तमभूत्—— समकालीनं द्रव्यं न कदाचित् तद् रूपं तद्भिन्नं च भवितुमर्हति । पत्रमिदं श्यामम्...श्यामभिन्नं च इति वक्तुं कठिनतरम् । अनुभवविरुद्धम् एतत् । किंतु मध्य वस्तुनः स्थितिः स्वीकर्तुं शक्यते वा ? 'मध्यम' इति तु संपर्कितकल्पना ।



यत्र तटद्वयं वर्त्तते तत्र 'मध्य'-कल्पना । यत्र तटं नास्ति

तत्र केनोपायेन 'इदम मध्यम्' इति वक्तुं शक्यते। कश्चित मनुष्यः पुरुषो भवेत, स्त्री वा भवेत् परमनयोः 'मध्य' इति कथं भवेत् ? नपुंसकस्तु अन्यः। एतद् भिन्न' वस्तु। यद्यपि अयं मनुष्यसदृशः केवलः कश्चिद् आकृतिविशेषः। अतो जननकार्याक्षमः स्त्रीरूपवान् मनुष्यः बन्ध्या...प्रजननशक्तिविहीनः पुरुषाकृतिमनुष्यो नपुंसक इति शास्त्रम। अस्मिन मध्यस्य स्थितिः कुत्र ? ......नेत्रं तस्याः क्षणं निहितम्। कपोलतल्पे अश्रुनिर्झरिणी निजमार्गं परिष्कृतवती।

( २ )

पद्मायाः इच्छा नासीत्। अनिच्छन्ती अपि स्वीकृतिं दत्तवती। परमद्य सा अनुभवति—विदेशीयाः आगच्छन्ति। अन्वेषयन्ति शोभनं स्थानम्... यत्र पर्वतः कलाशीलः--- गिरिनदी मर्मरमुखरा --- स्थण्डिल प्रदेशो मनोहारी --- वनलताः प्रगल्भाः --- विहगी स्वच्छन्दोबद्धा---। ततः तत्र अस्थायि च्छत्रमेकं प्रसार्य आश्रयन्ते। कियद् दिनानां कृते रङ्गिलच्छत्रमिदं बहुजनान् आकर्षति। तदनन्तरं तत्र छत्रं न दृश्यते। तेषां कृतिः केवलं स्मरणीया भवति। वनलता विरूपा दृश्यन्ते। नदी स्थिरा अवलोक्यते। पक्षिणी विशृङ्खला

पर्वतः कलुषितः भवति। स्थण्डिल प्रदेशश्च घृण्यो भवति।

( ३ )

विवाह एकं सामाजिकं छत्रम्। यस्य तले स्थित्वा मनुष्यो निजरूपं निजसंज्ञां च परिवर्त्तयति। अस्य छत्रस्य वर्णाली तस्य देहस्य वर्णाली भवति। अस्य छाया च जनम् आमरणमनुसरति--

पद्मा तदानीं वधूरूपेण अवधूतस्य गृहम् आगच्छत्। इदमासीत तस्य पितुरिच्छा --- परिवारस्य अभिलाषः --- बन्धुजनानाम् अनुमतम्--- एतदर्थम् अवधूतोऽपि बाध्य आसीत्। किंतु असवर्णा कादम्बिनी---? सा आसित अवधूतस्य सहाध्यायिनी। सहाध्यायिनी सहचरी अभूत्। सहचरी च सर्वाङ्गतया सहधर्मिणी अभूत्। कियत्-प्रतिश्रुतिषु प्रेम अन्तस्थमभूत् अन्तःसत्त्वोऽभूत् उभयस्य मिलनविन्दुः।

: मधुमिलनवासरः संभोगोन्मुखः। पद्मा पुष्पमाला-जलेषु मुहूर्तानां स्खलनं गणयति। मासत्रयस्य सारांशम् उदरे वहन्ती कादम्बिनी सहसा प्रविष्टा। मुखं तस्य आरक्तमासीत्। बलात् अवधूतस्य करं धृत्वा वहिरा



गच्छत्। मृत्तरः सज्ज आसीत्। अवधूतः मूढपशुरिव

निर्वाक् । तमसि प्रकाशं विच्छुरन मृत्तरः अन्तर्हितः । वातायनतः पश्यन्ती आसीत् पद्मा——तमसि पार्थक्यमेव प्रकाशितम् ।

( ४ )

छत्रस्य छाया तथापि तामनुसरति । वर्णाली देहं त्यजति । अस्यैव छत्रस्य कृते सा भीतमयी- - - घृण्या - - - विदेशीयः तां केवलं पश्यति । आत्मानं पृच्छति सा ——'अनूढ़ा वा ?'——प्रश्नः प्रश्नमयो भवति । इदानीम् अनुभवः स्फुटतरः—सा आद्यन्तविहीना "मध्या" । स्वयं समकालीनं द्रव्यम- - - तद्‌रूपं तद् भिन्नं च । मनुष्य-सदृशो मनुष्यः- - - न नपुंसकः- - - न वा बन्ध्या- - - ।

तस्या अश्रु शुष्कमासीत् । नारिकेलपत्रं सा निरीक्षितवती— न तत् स्वर्णवर्णं, न वा श्यामवर्णम् । इन्द्रधनुः निर्वापितम् । सूर्यस्य शेषप्रभातले पर्णानि कृष्णानि एव- - - ।

—o—

# उष्ट्राय अभिसारः

शीतलतारका दीप्ता। तमसा ग्लानिमयी। रात्रिः मूर्च्छिता । समयस्य मूर्च्छना कीटकण्ठस्था। मध्यमप्रहरीया रेलविरतिः विनिद्रा। उत्तप्तः किंतु रेलसरणिः। अधुनैव रेलो विगतः। तस्य गमनध्वनिः क्रमशः अपसरति। यात्रिनिवासनिकटे उपाविशत् शिप्रा। पार्श्वे एका चतुष्की रिक्ता आसीत्। पुरतः शिप्रा अपश्यत्---एका रतिविमुखा भिक्षुणी असयतभावेन तले निश्चेतनी। अन्यपार्श्वे विरागी रेलभिक्षुः गभीर सुप्तिमनुभवति। स्थिरभावेन सा चिन्तामग्ना आसीत्–'कथमत्र सा अवातरत् ? कुत्र गमिष्यति ?'

यत्र गच्छ---मरुभूमिः सर्वत्र समानः। उष्ट्राश्च सर्वत्र ऊर्ध्वमुखाः। सर्वत्र कण्टकमेव खाद्यम्। रुधिरमेव पानीयम्। शिप्रा देशे विदेशेऽपि विशालनगरीषु परिक्रान्तवती। इदानीं नगरेऽस्मिन् परिक्रान्तुमवातरत्। मुक्तपक्षिणीव सा संचरति। मनसि भयं नास्ति। हृदये उदवेग नास्ति। यत्कृते



प्रथमतः सा कातरा आसीत् तदेव तामद्य वशीकृतवत्।

अनेनैव उपायेन सा इदानीम अनेकान् उष्ट्रान् बद्धवती। ये उष्ट्रा आदौ तस्याः कातरतां भीरुतां च उदाहृत्य तामुपेक्षमाणा आसन् ते संप्रति समर्चन्ति .. मनाक् अहसत् शिप्रा।

मरुमार्गेऽस्मिन् पुरोग तुं बहवः तां प्रचोदित--वन्तः। बहुधनं च व्ययितवन्तः। ग्रीवायां रूप्यकहारान् बहुवारम् अलम्बयन्। किंतु मार्गादस्मात न कदाचित कोऽपि तां वारितवान्। निवर्त्तनाय एकामपि पैसां दत्तवान्। नैके साधकाः समाजेऽस्माकं वर्त्तन्ते न तेषाम अर्जितरूप्यकेषु साधुतायाः केवलो लोपो वर्त्तते— पुनरहसत् शिप्रा।

शिप्रा अनुभवति—सा एका मांसस्य मेखला। कटिदेशे परिक्रमा एव तस्या भाग्यम। क्षतस्य स्वाद-माहरणाय सा केवलमभिसरति। निजरक्ते स्नानमेव तत्कृते महातीर्थम्। पादतले उत्तप्तभूमिः। उपरि ज्वलन चण्डिमा। परितश्च मरुभूमिः।...बहव उष्ट्रा जायन्ते... जनिष्यन्ति अपि।

नयनतः अश्रु विमोच्य निजमूल्यं ह्रस्वतरीकर्तुं नैच्छत शिप्रा। सा पुरोगमिष्यति—एकरेलतः अन्य



रेलम्। एक पान्थशालातः अन्यपान्थशालाम्। एकस्मात्

अन्धकारतः अपरान्धकारम् । एकस्मात् कटिदेशतः कटिदेशान्तरम् । एकमरुतः अपरमरुम्......

बहिरागम्य अपश्यत् शिप्रः— पूर्वदिशि रक्तचिह्नं निर्वाणप्रायम् । शीतलतारकाः अवलुप्ता । मरुभूमिः तारकायाः शेषज्योत्स्नासु अवगाहते । तस्या मानसतो माया अपसृता । सा पुर आगता । उष्ट्रीव ऊर्ध्वमुखी अभूत् । सर्वं दृष्टिपथे अवतीर्णम । विज्ञापन-फलके पान्थशालायाः संकेतवर्णा ज्वलन्त आसन् । वैयक्तिकपुस्तिकायां सा वर्णान् शमयितुं चेष्टितवती । वर्णाः तथापि अभिसरन्त आसन् ।

—०—

## दिशा विदिशा

विदिशा उक्तवती ।

——दास ! अद्य शीघ्रमागमिष्यसि । गुरुतरं कार्यमस्ति । अहं बहिर्गमिष्यामि । अन्यथा भोजने यदि काचित् असुविधा भवेत् पश्चान्न वदिष्यसि ।

एतदर्थं श्रीदासः त्वरते ।

महानगरीमार्गो नीरवदीप्ता । नैशवेला दशोत्तरा । क्वचित् क्वचिदपि आलोको निर्वापितः । चतुष्पथ

कीर्तनमण्डली उदयापनप्राया । श्रीदासः सत्वरं प्रत्यावर्त्तते । अग्रे प्रशस्तवीथिः । तत्र एकस्मिन् पार्श्वे वटमूलः मण्डपीकृतः । तदूपरि नागरिकी ज्योत्स्ना अस्फुट प्रतिफलति । सहसा अदृश्यत छायायां दण्डायमाना काचित् सुवेशा । श्रीदासः भीतः सन् विरतः । सम्यक् च निरैक्षत ।

—उपरि आगच्छ । अन्यथा जना द्रक्ष्यन्ति ।

— विदि ! त्वमत्र ?

—हुँ... दास !

दीर्घं निश्वस्य विदिशा अवदत् ।

विदिशा मध्यवित्तसमुत्पन्ना । गृहे वृद्धपिता, माताऽपि । पुनश्च प्राप्तवयस्का भगिनीद्वयी । एकश्च अनुजः । दशमिता जना तस्या गृहे खादन्ति । ते च मासिकग्राहकाः । एतेषां भोजनव्यवस्था महानगर्यां मध्य वित्तपरिवारस्य एकविधं वाणिज्यम् । दशग्राहकेषु श्रीदासः अन्यतमः । तस्मिन् विदिशाया अतीवश्रद्धा ।

अद्य विदिशाया अपूर्वं वेशपरिपाटीं विलोक्य श्रीदासः चकितः ।



——विदि... !

——उँ... ।

——प्रत्यहमत्र आगच्छसि ?

विदिशा कुण्ठितकण्ठेन उदतरत ।

——हँ..., दास !

——प्रतीक्षा इयं किं आत्मीयस्य कृते ?

——नहि, ग्राहकस्य कृते ।

——विदि ! एकः अनुरोधो वर्त्तते ।

——कीदृशः ?

——त्वं जनासि—अहं चायपायी । सकृत् मया सह आगमिष्यसि ?

——कुत्र... ?

——उपाहारगृहम् ।

——नहि, दास ! मम समयो नास्ति ।

——चल, नु सकृत् !

विदिशा निरुत्तरा । श्रीदासः तस्या नासातः शोक—माविष्कृत्य ताम् अन्वनयत् । हस्तं च प्रसारितवान् ।

——चल, विदि ! चल... नु !



विदिशा तस्य करं धृत्वा मण्डपतः अवातरत ।

उपाहारगृहस्य एकस्मिन कोणे उपविश्य चायनिमित्तम आदिशत् श्रीदासः। विदिशा अधोमुखी। श्रीदासः मुखे तस्याः क्रमश आविष्करोति भीतिम् - - - कातरताम्- - - विकृतिम् - - - घृणाम - - - दैन्यम्- - - अनुतापमपि।

--विदि!

--उँ...

--पिव।

अञ्चलेन अश्रु अपसार्य चायपानमकरोत् विदिशा। कियत्कालानन्तरं श्रीदासः आश्वस्तः सन् अवदत।

—सर्वं ज्ञातम्।

--तदर्थं जुगुप्ससे ?

—नहि, विदि ! अहमनुभवामि—तव शाटीकायाः मूल्यवर्धनम् आवश्यकम्। सा निरुत्तरा।

चायपात्रं तथैव तस्या मुखे वर्त्तते।

—पितरौ जानीतः ?

—हँ..., दास !

श्रीदासः अश्रुधारं विलोक्य आलापं विलोमयितुम् अयतत।



—अन्यथा चिन्तितं ? विदि !

—–नहि, पृच्छ - - - यदवशिष्टम् ।

—–इदानीं परिणये का ते हानिः ?

—–त्वं बहुसरलः, दास !

—–अवगतम् - - - । समाजेऽस्मिन् जीवितुम् - - - - - -

—–इदमस्माकं वाणिज्यम् ।

—–आवश्यकम् ??

—–इयमपि एका दिशा - - -

—–विदिशा ? त्वम् उच्चजातिजा - - -

—–अतः वृत्तितः उपेक्षिता । चल - - - दास !
बहिरागच्छ - - - । उभौ प्रत्यावर्त्तनमार्गे ।
विदिशा धीरकण्ठ न अवदत् ।

—–दास ! अद्य त्वया सह प्रत्यागच्छामि ।

—–क्षमस्व मां, विदि !

—–न तवात्र त्रुटिः ।

—–अद्य रात्रेः तव अर्जनं - - - शतशः रूप्यकाणि - - -
मया परसात्कृतानि - - -

—–नहि, दास ! तव कर्त्तव्यं त्वया कृतम् । मया तु
कर्तुं न शक्तम् । चल, भोजनं ते व्यवस्थितं गृहे ।

नैशवेला द्वादशोत्तरा आसीत् ।



—o—

# सिद्धिः

सभा अनुष्ठिता । बहवः समवेताः । अनेके अत्र अभिज्ञाः । कति च युवान उद्योक्तारः । अभिज्ञः सभापतित्वेन मनोनीतः । सभा प्रारब्धा । विषय आलोचितः ।

इदमस्माकं मन्दिरम् । अतीव प्राचीनम् । अस्माकं परंपरायाः साक्षी, अतीतस्य प्रतीकम् । अनुदिनमेतत् जीर्यते । अवश्यमिदं दुःखावहम् । अस्य संरक्षणम् आवश्यकम् । परं न कोऽपि किमपि ददाति । केन प्रकारेण इदं चिरायेत ? — इत्थमुपस्थापितवान् उद्योक्ता राजुः । विषयोपरि चर्च्चा पुष्कलाऽभूत् । परं न काऽपि निष्पत्तिः सर्वसम्मतया सिद्धान्तिता । रात्रिः अधिका भवति । भोजनवेला विलम्ब्यते । मम कार्यान्तरमस्ति । इत्थं जल्पनानिचये सभा स्थगिता ।

राजुः गृहमागतः । तदा तु गृहिणी साक्षात् कोपमूर्तिः । सरोषं सा अभाषत ।

—अस्माकं तत्र किं वर्त्तते ? इदं तु सर्वेषां कर्म । सर्वे कुर्वीरन् । यस्तु मन्दिरं निर्मापितवान् न तं कश्चित् पृच्छति । तस्य नमाऽपि नोच्चारयति । तव का वाऽस्मिन् कीर्त्तिः ?

—अहो... ! इदमस्माकं पूजास्थलम् । अस्य रक्षणम् अस्मत् कर्तव्यम् । कीर्तेः कथा कुत्र ?

—निर्माता मृतश्चेत् किं तस्य पुत्राः पौत्रा वा न सन्ति ? रक्षणाय ते किम् असमर्थाः ?

—ते तु संप्रति विशालाः । दरिद्रद्रव्यमिदं तेषां दृष्टिषु तुच्छम् ।

—मन्दिरं नश्यतु वा तिष्ठतु, अस्माकं किमस्ति ? मन्दिरं स्वस्थीकर्तुं त्वं प्रतिद्वारं गच्छसि । परं तव पश्चात् ते किं वदन्ति, जानासि ?

—किम्...?

—ते वदन्ति—अस्य गृहे तण्डुलमपि नास्ति । बहिरागम्य जनसेवां करोति ? हें..., एवं प्रकारेण धनानि संगृह्य जीवति । धर्मनाम्ना धनीभवितुं यतते ।

—जना असहिष्णवः । अपवादः तेषाम् अभ्यासः । एतादृशा न आत्मानमुपकुर्वन्ति, न वा अन्यस्य उपकाराय यतन्ते । त्यजैतत् ।

—अद्य सभायां का निष्पत्तिरभूत् ?

—न काचिदपि ।

—तर्हि... ?

—अन्यदा पुनः सभा भविता ।

पुनः सभा आकारिता । राजुः सकोपम् अवदत् ।

—कतिवारं भवतां द्वारस्थो भविष्यामि ? किं मे कार्यं नास्ति ? भवन्त एव व्यापृताः ? यदि कार्येऽस्मिन् सहायेरन तर्हि अग्रेसरन्तु । अद्यैव प्रतिश्रुण्वन्तु । अन्यथा किमर्थं सभा ? या कापि निष्पत्तिः इदानीमेव ग्रहणीया ।

सर्वे सर्वान् केवलं साक्षीकर्तुं प्रवृत्ताः । न किमपि स्थिरीकृतम् । समयेऽस्मिन् मेघः प्रावर्षत् । वातो झञ्झायितः । सर्वे पलायिताः ।

परेद्युः प्रभाते राजुः अपश्यत्—झञ्झाहतं मन्दिरं भग्नम् । अतिदुःखहृदयेन स मन्दिरमुपगतः । पुनरपश्यत्, भग्नावशेषोऽपि तत्र न विद्यते । राजुः सक्रोधम् अगर्जत् । किमपि प्रत्युत्तरं न प्राप्तवान् । ततः स प्रतिजनम् अपृच्छत् । परं वृथा अभूत् । प्रत्यावर्त्तनमार्गे सः अपश्यत्—प्रतिद्वारं मन्दिरशेषांशः सोपानायते ।

—*—

# अहिराजः

यद् वर्त्तते तत्सर्वं समाप्तिप्रायम् । मार्गः शून्यः । वृक्षो निष्पल्लवः । अरण्ये पादविह्लमपि नास्ति । पर्वतस्य रूपं कलयितुं न शक्यते । किन्तु गुहा लक्ष्यते । तत एव अहिराजो निर्गतः । दूरं च आगतः । मार्गेऽस्मिन् तस्य दीर्घदिनानां वसतिः । गुहा विस्मृता ---

अत्र एव सुप्तः । केवलं निश्वासेन अनेक-शरीरात वसनमुड्डयति । अनेकच्छायाभिः स्वच्छायां परिपुष्णाति । तदर्थं मार्गस्य आवश्यकता नास्ति । यत्र गच्छति स एको मार्गः । वसतेः अपेक्षा नास्ति । यत्र निवसति स एव आवासः । खाद्यस्य परिगणना नास्ति । यद् भक्षयति तदेव खाद्यम् । स न जनाति—कुत्र स्वयं गच्छति... ?

सः अनुभवति—– समुद्रस्य सर्वत्र तटं नास्ति । किन्तु सर्वस्य द्वीपस्य सर्वत्र तटम । एकस्मिन द्वीपे स्थित्वा सर्वतः कथं वा जलपानं कर्तुं शक्यते ? अतः समुद्रे प्लवमानतैव वरम् । पुनश्च चन्द्रे भ्रमति तारका

भ्रमति··· सूर्यों भ्रमन्ति ··· अतो द्वीपोऽपि भ्रमिष्यति। सर्वे आगमिष्यन्ति। मुखेऽस्मिन् पतिष्यन्ति।

अद्य अहिराजः अतिपुष्टः। निजच्छायातोऽपि पृथुलः। देहे भिन्नवर्णालि। नेत्रं च नवीभूतम्। किन्तु दन्तावली प्राक्तनी। मुखपरिसरः पूर्वापेक्षया दीर्घतरः। सुप्तिः पुराणी। लाङ्गूले इदानीं पूर्वनिर्मोकस्य शेषांशः।

( २ )

अवसानम्......अवसानम्......अवसानम्...। जीवनं न दृश्यते। निजस्वादे अवसानमेव विवर्धते। तृणं शुष्कम्। वनं शुष्कम्। निजस्थानमपि शुष्कम्।

पवनम् अपेयम्। चन्द्रो विखण्डः। सूर्यस्तु प्रकाशमात्रम्। नयनं झल्लसते। गुहा कुत्र ? कियद् दूरे... ? कति योजनानि...?

अहिराजो निवर्त्य निजदेहमपश्यत्। स्वस्मादेव बहवः अहिराजाः जायन्ते। कति जाताः। कति च वर्धिताः। सर्वे मिलित्वा तदीयं निर्मोकं खादन्ति - - - पुरिपुष्णन्ति। रोषाविष्टोऽभूत् अहिराजः परं निरूपायः। धरणीयाः - - - मारणीयाः- - -" इत्येवं

विभावयति । परं विमूढः । सः पुरः अपश्यत्—चन्द्रो नास्ति- - - तारका नास्ति- - - आकाशो नास्ति- - - सूर्यस्तु निकटायते ।

—*—

## चन्द्रमण्डलम्

शूकररक्षी कोदण्डः । परिभ्रमणी तस्य इच्छानुसारिणी । वसतिः संध्यानुवर्तिनी । शूकरचारणं तस्य जीविका । बाल्यात् सः शूकरसंचारकः । मालिकस्तु अन्यः । स केवलं क्षेत्र—द्रुम-लता-वन-पर्वतानां मालिकः । तस्य अस्त्रं नाम एकप्रलम्बो दण्डः- - - एका मूरली च ।

पुरोऽयं बहुशाखो वटः । कियद् दिनकृते अत्र स निवासी । तदा प्रभृति वटः वंशीस्वननिष्णातः । मूरली च मरुत् पूर्णदेहा । वटमूलं शूकरशाला । अत्रत्य-पर्वते मृत् खोदनं दीर्घदिनेभ्यः प्रचलति । बहवः कर्मरता अत्र । यायावराः केवलमत्र स्थायिनः । अयना- - - अत्र कर्मकारी । कोदण्डस्य वंशीस्वनेन सह सा अतिपरिचिता । तदर्थमत्र सा आबद्धविहगी ।

एकदा सायंकाले प्रत्यावर्तते कोदण्डः । चन्द्रमा मध्यनभसि । स च वृत्तबद्ध इव दृश्यते । वृत्तमध्ये तारका खचिता । कोदण्ड आकाशमपश्यत् । अतीव मनोरमः । अपूर्वम् आनन्दमनुभूय सः अयना-माकारितवान्—अयने ! अयने ! । अयना लघुकुटीतः त्वरया निर्गता । सा अपश्यत्—मुग्धभावेन आकाशं प्रेक्षमाणः तिष्ठति कोदण्डः । अयना तत्र गत्वा कोदण्ड-संयुक्ता अभवत् । चन्द्रदर्शनकाले अयना मुग्धतया अवदत् ।

—कुदुन- - - ! चन्द्रमण्डलमिदम् । अस्य दर्शनं शुभकरम् । इदमपि शुभसूचकम् । परं मध्ये तारा वर्त्तते इति दिनद्वये अतिवृष्टिः भवेत् ।

कुदुन साश्चर्यमवदत् ।

—अहं कुत्र स्थास्यामि ?

—मम गृहे - - -

—किंतु - - - तव पिता - - - माता - - -

—ते न भीरवः । नैव आश्रयकातराः । नूनं सहायिष्यन्ते ।

—मम कृते - - - त्वं नु वर्त्तसे - - - । किमर्थं चिन्ता ?



विहस्य अयना प्रधावितवती । कोदण्डः प्रसन्न आसीत् ।

( २ )

इदानीं तथापि कुड्डुन् यायावरः अयनायाः दुर्बला कुटी बहुदिनतो भग्ना । मृत्तिकासु च मिलिता । किन्तु स शूकरैः सह भ्रमति । पार्थक्य नाम ––तदानीं स एकाकी आसीत । अद्यत्वे अयना सहयायिनो । संचारण वृत्तिधारे उभयस्य जीवनं परिवर्तितम । अयना गृहं त्यक्त्वा यायावरी अभूत् । तथापि शूकराणाम अस्थायि-शालासु कोदण्डस्य वक्ष एव तस्या गृहम् । वटमूल वसतिषु अनुभूतिः नवीना । किन्तु सर्वेषां वटानां छाया तदर्थं न समाना ।

( ३ )

मासद्वयं त्रयं वा गतम् । कुड्डुन् मनाक् विचलितः । दिनत्रयं शूकरा न कुत्रगताः । अयना हि नितरामस्वस्था । शय्यास्तरणे वटमूले एव निपतति । तीव्रवेदनाम् अनुभवति । देहभारात् उत्थातुमपि न शक्नोति । पानीयं च न स्पृशति ।

दिनपूर्णं सः अयनानिकटे । आश्वासयति··· सान्त्वयति···शुश्रूषते । संध्या आगता । परितः संपश्यन कोदण्डः दीपमदीपयत् । सहसा पेटिकोपरि दृष्टिः पतिता । तत्र खचिता मूरली धूसरा । मासत्रये अतिबहुना वारत्रयं

धर्मितं न वा । खिन्नतया स आकाशमदृश्यत् । क्रमशः प्रतीतं चन्द्रमण्डलम् । तद विलोक्य किंचित् प्रसन्नोऽभूत् कुदुन । किंतु क्रमावभूत चित्कारेषु उन्मादिनी आसीत् अयना ।

चन्द्रमण्डलं शुभकरमिति विचिन्त्य आश्वस्त्या चिन्तयति कुदुन——तस्य एकः पुत्रो भविष्यति । अयना च स्वस्था भविष्यति । सहसा मण्डलमध्ये तारा प्रतिभाता । तामवलोक्य दिनद्वये अतिवृष्टिः भवेत् इति विभाव्य मनः तस्य भग्नम । तथापि मनसि पूर्वस्मृतिः——'इदं शुभकरम्'। अतः अयनया सह विवाहः संजातः । तदनु अतिवृष्टिः उपभोग्या आसीत् । परमद्य एकस्य कृते गृहं न निर्मितम् । पुनरेकस्य कृते ......। अतिवृष्टया अयना अत्यन्तं अस्वस्था भवेत् । शीतलरोगद्वारा तस्या मृत्युरपि संभवेत् ।

रजनी निशब्दा । सद्यःसुप्ता अयना । परमुपविष्टः कुदुन् निकटे । पवनो मन्थरः । चन्द्रमण्डलम् अवलोक्य अभिशपितुं यतमान आसीत् कुदुन् ।

—o—

# अपभ्रंशः

( १ )

आश्रमस्य उद्यानिकटे उपविष्टो मन्मथः। आश्रमस्य बालकबालिकाः इतस्ततः खेलन्ति। तेषाम् उपजननी मधुपा एकपार्श्वे उपविश्य चिन्तामग्ना। अर्धधवलकेशराशिः पृष्ठे प्रसारितः। मस्तके सिन्दूरं नास्ति। गलेऽपि मङ्गलसूत्रं नास्ति। धवलवसनं तस्या वार्धक्यं खद्योतयति। उपनेत्रं च आभिजात्यं व्यञ्जयति। निरुद्वेगदृष्टिः लघुद्रुमाणाम् अग्रभागं बालानां मस्तककृष्णतां च सामान्यं स्पृशति।

मन्मथः अत्याधुनिकः। भारतीयपरंपरायां घृणाबोधः तस्य तीव्रः। परमस्मिन् उद्यानदृश्ये स श्रद्धालुः। अत्र परंपरायां गन्धो नास्ति...रक्षणशीलता नास्ति...संकीर्णदृष्टिभङ्गी नास्ति...केवलं भावसामान्यम्।

: प्रतिकूलवातेन स्रोतसः फेनानि कदा कदाचित् प्रत्यावर्तन्ते। परं न पुनस्तानि फेनरूपेण प्रवहन्ति...अपितु जलरूपेण...

मन्मथः सहसा सचेतनोऽभूत् तस्य बन्धोः आमन्त्रणविषये । श्वः पितृश्राद्धः । अतः बन्धुमिलनं सहभोजनं च इच्छति स इति विचिन्त्य मन्मथ उत्थितः । उपहासः अधरे तस्य रंगायितः ।

( २ )

—सुप्रभातम्···सुप्रभातम्···

स्वागतम्- - - स्वागतम् - - - ।

मन्मथमभिनन्दितवान विश्वनाथः ।

विश्वनाथः विषण्णमनस्कः । अधरे हास्यं तस्य असुन्दरम् ।

कुशलतामपृच्छत् मन्मथः । विश्वनाथस्तु नीरवः । मनमथः गृहं प्राविशत् । अपश्यत्—बन्धुपत्नी शय्याशायिनी । कन्या च पीडिता । मन्मथः अपृच्छत् ।

—किमर्थमिदमायोजनम् ?

—अद्य मे पितृश्राद्धः । श्रद्धास्मृतिवासरः । पुनर्निरीक्षण दिवसः ।

मुक्तभावेन अहसत् मन्मथः ।

हास्यचकिता कन्या हठात् विलपितुमारब्धा।

क्षणं विरम्य आरभत मन्मथः।

—ईदृक् स्थितिषु श्राद्धस्य का आवश्यकता ? अद्यत्वे को वा कं स्मरति ? यो गतः स गत एव। निष्कारणमिदम् आयोजनं समयस्य अपव्यय एव।

——अतीतहीनवर्तमानस्य स्थितिः कुत्र, मन्मथ ! ?

——जीवनं नाम जीवनमेव। मार्गे ... भोजनाय भोजनालयाः सन्ति। पानाय मधुशालाः सन्ति। दर्शनाय प्रेक्षागृहाणि सन्ति। पुनश्च रेलविरति-निकटे उपनगरीणां मधुमन्दिराणि सुलभस्वादपात्राणि प्रदर्श्य अस्मान् अभिनन्दन्ति। विश्वनाथ···! सभ्यता यत्र गच्छति तत्र अस्माभिः गन्तव्यं किल ?

वितर्कितुमिच्छा नासीत् विश्वनाथस्य।

मन्मथस्य मुखं विलोक्य स स्थिर आसीत्।

——इदानीं सभ्यता तत्र गच्छति यत्र नूतनसेतुः निर्मीयते - - - - - - नवप्रासादा नभश्चुम्बीक्रोयन्ते- - - यत्र नूतन कर्मान्तानां शिलान्यासो भवति ... यत्र रात्रिः मांसगन्धमाहरति - - प्रातः उच्छिष्ट

स्तूपतो निर्गच्छति- - -यत्र च बहुपादुकानां समान-चिह्नानि जीवनस्य संकेतं प्रक्षालयन्ति ।

बन्धुमिलनं मनोरमपरिसरे समाप्तम् ।

( ३ )

अपरदिवसे तस्मिन्नेव उद्याने मधुपामवलोकयन् उपविष्टः मन्मथः । आश्रमबालकानां विषये जिज्ञासां वहन स मधुपाम् उपगम्य अपृच्छत् ।

--किमेषाम् इतिवृत्तम ?

उपनेत्रं शिथिलीकृत्य मधुपा सामान्यमहसत् ।

---अपभ्रंशः··· ।

मन्मथः चकितः ।

— किम··· ? किमुक्तम्···?

--यत्र सामान्यसिद्धिनिमित्तम् एकः अस्थायिमार्गो निर्मीयते स एव प्रदेश एषामितिहासः ।

अवशिष्टाः कति प्रश्ना नोद्गता मन्मथमनसि । किंतु चिन्तायां संलग्नः अन्यः कश्चिद् अवशेषः—मन्मथः विश्वनाथश्च···उभयस्य जीवने कुत्राऽयं क्रान्तपथः ?

मन्मथः निजवत्तं न जानाति । किंतु विश्वनाथ-



-विषये निष्णातः । स क्वचिदपि इच्छति विश्वनाथः

मन्मथो भवतु । किन्तु तत् कथं वा कर्तुं शक्यते ! आश्रमबालक इव इति-संस्कृतिशून्यः स आत्मानं विचारयति । किन्तु व्यथां नानुभवति । पुनश्च 'सर्वे अपैतृका भवन्तु' इत्यपि चिन्तयितुं न शक्नोति । परं लक्षयति—प्रतिदिनं लक्षशो मन्मथा जायन्ते । विश्वनाथ-सख्या ह्रस्यते । संख्याहीनानां स्वार्थं को वा चिन्तयति ? को वा तेषां गौरवम् आकलयति ? इत्थमेकं जीर्णमतीतं वहन् विश्वनाथो वा किं निमित्तं जीविष्यति ? सः म्रियताम् ··· तस्य अतीतं विलुप्यताम्···।

तथापि कति व्यथा शब्दाः तस्य कण्ठं रुन्धन्ति —'मन्मथः मृद्‌गर्ततो विश्वनाथस्य अस्थिनिकरं पुनर्न खनिष्यति नु ?'

## अक्रतुः

ते युवका आसन । परं तेषु यौनतृष्णा सुप्ता आसीत । ते हिंस्रा आसन । किन्तु तेषां दन्तावली



चन्द्रस्नात-समाधिचूडा इव शान्ता आसीत् । ते पशव

आसन् । परं तेषां वैपिन्यवृत्ति प्रति स्पृहा नासीत् । वन्दियाने दोषिण इव ते बहिः पश्यन्त आसन् । नयने तेषाम् इयमेव वार्ता––तेषां को दोषः ?

सर्वेषां जीवने ऋतुः आयाति । तेषां जीवनेऽपि आगतः । अस्य कृते किं ते अपराधिनः ? वन्दियाने तेषां मनांसि उपद्रुतानि आसन् । कति विप्लुतचित्काराः तेषु अन्तर्लीना आसन् । तेषां क्रन्दनं वन्दियानस्य अनुरणनेषु अव्यक्तमासीत् । तत्र प्रिया वर्तते । प्रियतमोऽपि वर्त्तते । दूरत्वं तु सहस्रयोजनम् ।

( २ )

पौरपालिकाया अयं नर्देशः—अधुना अऋतुः । मार्गेषु वीथीषु च श्वान उन्मादिनः । हिंसा तेषु प्रबला । कामुकाः सर्वे । अतो हन्तव्याः ।

घातकाः तत्पराः । कुक्कुरमारणे तेषां पुरस्कृतिः । बहुयत्नेन श्वान एकीकृता वन्दियाने । ते तु केवलं घातकानां मुखं विलोक्य विकली भवन्ति – एतेषा–मुच्छिष्टेन वयं जीविताः । वयं जीविता इति किम् अपराधः ?

ते गोष्ठीविहीना। तेषां स्वरे किन्तु वैविध्यं नास्ति। प्रवृत्तिरपि द्विधा न भवति। कृतिरपि न विभिद्यते। तथापि ते पराजिताः...पिञ्जरबद्धाः? तेषां निकटे मरणस्य मुक्तेर्वा किमपि पार्थक्यं नास्ति। मरणे एको मरिष्यति। मुक्तावपि एकः एकाकी पलायिष्यते।

वन्दियानं चतुष्पथे संस्थापितम्। द्रष्टुं जनाः समागताः। बालिकाः...युवतयः...युवकाः - - - वृद्धाः बालकाश्च—सर्वे वचनमुखराः 'असभ्यम्' - - -असभ्यम्-- इति उपहासेन सर्वे कोलाहलं कुर्वन्ति। किन्तु युवकाः युवतीनाम् अर्धनग्नशरीरं गवेषयन्ति। युवतयश्च युवकानां मुखानि पिबन्ति। कुक्कुराणां करुणदृष्टिस्तु इमामेव कौतुकसंगोष्ठीं किंचित संस्पृश्य प्रत्यावर्तते। अनुनय-मुद्रया दन्तावली जिह्वामास्वादयति।

( ३ )

मार्गतो वृक्षाणामुच्छेदे मार्गो न रमणीयो भवति। नदी शुष्काऽपि बालुकामयता न लुप्यते। किन्तु को वा विचारयिष्यति? तेषां कृते ऋतुः निश्चितः। परम् अस्मत्कृते - - -? अस्मत्कृते सैव बालुका प्रतिपदं जपमाला।

अद्य कुक्कुराणां श्मशाने प्रहरिणो भ्रमन्ति। वीथिषु उपवीथिषु चराः संचरन्ति। तथाप्यत्र नैका युवतयो धर्षिता इति वार्ता- - ॥

मिथुनितभीतिनिवहे कुक्कुरा मृताः। घातकः पारितोषिकं प्राप्तवान्। किंतु ऋतुनिमित्तं कुक्कुरा अपराधिनः अभूवन्। वीथीप्रवृत्तिः तेषां इदानीमपि तत्रैव वर्धते। ऋतुश्च अऋतुः भवति।

—*—

## काकदन्तः

तैरेव समीचीनं कृतम्। ते हि विस्मृतवन्तः। अहम् अनुतप्तः। यतोऽहं विस्मर्तुं न शक्नोमि। अद्य मम आत्मवचनेषु एको मुमूर्षुः स्वरः। स्वरोऽयं न मम। अपितु पारिपार्श्विक स्वररेणूनां संघातः। इममेव स्वरं पुनः एक एव गन्धः अवरुणद्धि। अयं गन्धः मम मातुः चेलाञ्चलस्य। अञ्चलेऽस्मिन् मम पितुः भ्रातुः,

भगिन्याश्च मुखस्वादः अद्यापि विद्यते। अत्र च गृहस्य मे अन्नव्यञ्जनादीनां सुरभिः अनुमेयः। अत्राऽपि मम पुत्रकन्यादीनां मलमूत्रहरिद्रागन्धः वर्तते। तैलाक्त अञ्चलेऽस्मिन् अद्यापि दृश्यन्ते — पाकशालायाः काककृष्णवर्णाली ...... खाद्यपेयचिह्निता अपाठ्य-वर्णमाला··· हस्तशेषजलस्य चित्रवन्या......लघुविश्वस्य आदिरूपाली···उपेक्षित भाषा कोशस्य अप्रयुक्त शब्दाः।

मातृपृष्ठस्वेदेन सह मम अश्रूणि अत्रैव मिलितानि। स्वेदलोतकयोः मिश्रितगन्धः इदानीमपि मानसमायाति। मन इच्छति–तस्या एव जघने मुखं निह्नुय विलपितुं दीर्घसमयं यावत्। ततो मां सा मिथ्या कथामुदाहृत्य अवश्यं प्रतिबोधयेत्। पुनश्च ते नैव अञ्चलेन नयनं मे परिष्कुर्यात्।

अद्यापि मम माता पुत्रं मे दर्शयति– भीषयति --- विस्मापयति—– 'टुटुन्! अरे, पश्य! अयि, झुमि- - -! पश्य - - -, अयं काकः - - -। अस्य दन्ता विशालाः। यदि कश्चित् क्रन्दति तर्हि तमयं काकः चर्वति। कन्या मे पृच्छति—–'मातः! दन्ताः कुत्र?' सा उत्तरति—– 'पश्य' तस्य अक्षिनिकटे -- '। कन्या मे

सर्वं बुध्यति । पुत्रस्तु केवलं पश्यति । हसति अपि । किन्तु कन्या विस्मयते, विभेति च । कथाप्रवाहं विलोमयितुं यतते ।

: अहं तु प्रत्यावर्तनस्तरे नास्मि । अन्तःसत्त्वं नष्टं मया । काकदन्तमन्विष्य अनागम्य वर्त्मनि उपस्थितः । तथापि माता मे चिन्तारता स्यात्---"वामनो मे अवश्यं प्रत्यागमनमार्गे" । पत्नी अपि तथैव विभावयेत्---"स तु अनतिदूरे नूनमागस्यमानः" । अतीतायां भोजनवेलायां पिता पृच्छेत्---"वामनो न दृश्यते ? किं न प्रत्यागतः ?"

किन्तु मदग्रे निषिद्धनीडस्य स्खलतप्रणवः । प्रतीक्षाया अववाहिकासु धूमविहारः । अभिलाषेषु श्वस्तनस्य दीर्घसूत्रता । स्मृतिषु काकदन्तस्य सैव- - -किम्बदन्ती ।

: मम मातुरञ्चले संप्रति पुत्रकन्याभिः स्नेहनिह्नुतिः क्रीड्यते । अवसरेऽस्मिन् मम पत्नी मां विस्मृत्य हसितुम् अवकाशं लभते । किंतु यदा तस्या अञ्चले अहमेकदा मुखं निह्नुतवान् इति स्मरति तदा अभिशपति । मम जन्मना सह तस्या जननमपि धिक्करोति । अहं हि असभ्यनगरस्य असिद्धनागरिकः ।

( ३ )

: अहं तटस्थः--- तथापि काकुत्स्थः । अहं चिन्तयामि---नग्नो भूत्वा यदि निजवसनं मुखे निधाय विलपिष्यामि तर्हि साधु भवेत् । किन्तु काकदन्तात् बिभेमि । आशासे च आत्मजायाः वसनाञ्चले मुखं निह्नूय विलपितुम् अवसरं लभेय । न जाने, तदपि सम्भवेद् वा ?

—*—

# नूपुरम्

पुरा गृहशोभार्थं शुकः, मयूरः, हरिणः, अन्ये च शोभनशीलपशुपक्षिणिः पाल्यन्ते स्म । इदानीं तु कुक्कुरः पाल्यते । मनुष्यतः अधिकं स्निह्यते । साधुयत्नोऽपि नीयते । इयमस्माकं परिवर्तितता दृष्टिभङ्गी । इयं च आधुनिकता -- चिन्तयति समसुर ।

कुक्कुरेण सह क्रीडति वृद्धः समसुर् रहमन् । प्राप्तावसरो जिल्लापालः । तस्य आत्माभिमानमद्य न न्यूनम् । आत्मदैन्यमपि नाल्पम् । संप्रति सः अनुभवति ––पत्नी, कन्या, भगिनी, माता, इति सर्वेषां पादे एकमेव नूपुरम्- - - - - -।

: - - - - - - प्रियादेवी तस्य पत्नी । सुन्दरी-कन्याद्वयम् आसाद्य साऽपि आत्मदैन्यमुपशमयति । निजनूपुरं कन्यायाः चरणे बद्ध्वा सा स्वस्तिमती । तेनैव विस्मर्तुम् इच्छति सा पूर्वचरितम् - - = - - पूर्वजात्यन्तरम्- - - पूर्वधर्मान्तरम्- - - ।

: प्रियादेवी अद्य नृत्यायने अध्यापिका । प्रथमतः साऽत्र विद्यार्थिनी आसीत् । तस्मिन्नेव समये वार्षिकस्नेहसम्मेलनम् आयोजितम् । जिल्लापालः समसुर् आसीत् उत्सवस्य मुख्यातिथिः । तद् दिने प्रियादेवी मुख्यनर्तकी आसीत् । तस्या आवर्तनाभौ पृथिवी अनृत्यत् । यौनोद्धतः अभूत् परिसरः । कटाक्षतः पश्चपादपर्यन्तं अखेलत् गुप्तशिशोः प्रथमस्मितम् । जिल्लापालस्य उपनेत्रे प्रियादेवी द्वैता- - -अद्वैता- - - अनेकान्ता- - -एकान्ता- - -

: परस्परप्रशंसायां मनुष्यः श्रीमान् भवति। अस्मिन् चिन्ताप्रच्छदे प्रसन्नः समसुर् पारितोषिकद्वारा प्रियादेवीं व्यभूषयत्। पुरस्कारनेपथ्ये परस्परप्रतिबिम्बं उभयत्र प्रतिफलितम्। ततः प्रीतिकैव.यं कुङ्कुमितमभूत्। तदनु जातिः गता- - -धर्मो गतः - - -वयोविचारो लुप्तः - - - पदमर्यादाऽपि विम.र्शयं नागता।

: क्व ते नो दिवसा गताः= - - - - -

निवासो नृत्यहीनः संजातः। जिल्लापालः स्थानान्तरितः। प्रकृतिः परिवर्त्तिता। कन्या एका समजनि। समसुर् पुनरात्मगौरवम् अन्विष्टवान्। अविवाकदाम्पत्यजीवने प्रियादेवी अपि अभिशप्तनूपुरस्य अनुरणनम् अन्विष्टवती। परित्याग उभयस्य आत्मभूमिरभूत्।

त बला.वादकस्य ताने ताने प्रियादेवी पुनर्नूपुरम अबध्नात। लीला समारब्धा। आः - - - इयमेव परमाश्वस्तिः। निजनिर्भरा प्रियादेवी नृत्यायने अध्यापिका संजाता। ताबलावादकः- - -प्रियादेवी- - - प्रियादेवी - - - ताबला.वादक इत्यनयोः वृत्ते नृत्यायनं पुलकितम्। कटितः कक्षमादाय वक्षः पर्यन्तं बहवः

छन्दोबन्धा देहलिप्ता: । ततः अन्तरालतः पुनरेकशिशोः क्रन्दनं श्रुतम् ।

: जलं न केवलं तृषां, क्षुधामपि उपशमयति इति ध्यायं ध्यायं समसुर् पदवीतः अवसरं प्राप्तः । प्रियादेवी चिराय दूरिता । किन्तु कन्याद्वयं दूरतो विलोक्य आनन्दति समसुर् । मुक्तकण्ठेन हसति । कुक्कुरं च वक्षसि निधाय चुम्बति। जिल्लापालस्य अभिमानेन उपनेत्रं पुनः पुनः शिथिलयति ।

प्रियादेवी हर्षोत्फुला प्रायश्चित्ताशया । कन्याद्वयस्य चरणेषु सा नूपुरं बद्धवती-इयमेव सान्त्वना । रूपसस्यमयं संसारं कन्याद्वयी आनन्दयति नु···! यदा प्रशंसाध्वनिनिवहे जनसमागमे कन्याद्वयी नृत्यावर्तते तदा प्रासादोपरि समसुर् उपनेत्रं नयने निदधाति । कुक्कुरा धृत्वा जिल्लापालस्य अभिमानेन पश्यति—परितः रूपस्य सस्यम । सस्यमिदं आत्मसात्कर्तुं बहवः शस्त्रिणः कलहायन्ते । सस्यकर्तने नैके व्यापृताः । किन्तु 'रूपी' रूपसस्यं न समापयितुं ददाति । शिस्त्रीणोऽपि कर्तनस्य समापनं नाभिलसन्ति ।

उपनेत्रम् अवतार्य पुनः समसुर् निरीक्षते—तापविग्ना महिषा आविलजलेन देहं पङ्कीकरोति ।

उत्थाय अपि पुनः पुनः निमज्जति । अनुभवति केवलं तापम् । अभिलषति छायानाम्ना तिमिरम् । पुनः पङ्किल जलं पिबति - - - पाययति अपि ।

—o—

## शुक्लधान्यम्

माता सावित्रीव्रतनिमित्तं द्रव्याणि सज्जीकरोति । मम अनुजः अहं च तत्र उपविष्टौ । किंचित् आनेतुं पिता विपणीं गतवान् । माता तं प्रतीक्षते । कुपिता च भवति—एतावत्कालपर्यन्तं स कुत्र गत इति । माता द्वारपर्यन्तं गच्छति । इतस्ततः पश्यति । पुनरागत्य विरज्यते । मम अनुजस्तु पूजाफलानि पश्यति । मामपि दर्शयति—तत्र कदली···तत्र नारिकेलम्···। सोऽपि व्यस्तो भवति । कदा पूजा समाप्येत इति । तमहं वारयामि— नेत्थं वक्तव्यम् । पूजाद्रव्ये स्पृहा न कर्तव्या ।

द्वारे पिता आकारितवान्—'मिनि ! मिनि ! द्वारमपावृणु ।' अहं गत्वा द्वारमुद्घाटितवती । पिता

अन्तरागच्छत् । मता तदानीं कोपमूर्तिः । परं तं विलोक्य शान्ता संजाता । तथापि विरक्तया अवदत्—'इदानीमपि समयो न ज्ञातः ?' पिता तु नीरव आसीत् ।

पूजा समाप्ता । प्रसादः अस्मासु वितरितः । ततः कलसनारिकेलं खादितुं मम अनुजः मां संकेतितवान् । मातुः भयेन स मया वारितः । ततो यदा माता शान्ता आसीत् तदाऽहं पृष्टवती—'मातः ! अयं कलसः । तस्य तले शुक्लधान्यम् । तस्योपरि च आम्रपर्णम् । तदुपरि नारिकेलम् । किमत्र तात्पर्यम् ?' हासमुखी माता मे अबोधयत्—'मिनि ! कथा इयं महती । शुक्लधान्यं जीवनस्य आदिबीजरूपेण स्वीकृतमस्माभिः । अयम् अक्षयो बीजः । उदरे अस्य महाशक्तिः । बीजोऽयं कलसरूपं संसारं वहति । संसारोऽयं सुखदुःखेषु भारवान् । सुख-दुःख-कालप्रभृतीनां परिचायकं कलसजलम् । जलवत् सर्वमिह प्रवहति । कलसोपरि आम्रपर्णं संसारिकजीवनस्य व्याप्तिमत्तां व्याहरति । जीवनं महत् । जीवनं व्याप्तिमत् । तदुपरि च नारिकेलं संसारोत्तरशक्तेः द्योतकम् । नारीकेलस्य जलमिष्यते खलु ? कलसजलतो नारिकेलजलं मधुरम् । तथैव संसारतः संसारोत्तरं मधुरम् । सांसारिकसुखतः

संसारोत्तरसुखं मधुरतरम् । इदमेव जीवनस्य लक्ष्यम् । शुक्लधान्यं प्रारम्भिकजीवनस्य शुद्धतां, पवित्रतां च द्योतयति । एतदर्थं सर्वमिदं शुभकरम्—माता अहसत् ।

( २ )

अतिस्नेहेन परिपुष्टा अहं, लालितश्च मम अनुजः । अहमद्य प्राप्तवयस्का । मम अनुजः शिक्षितवयस्कः । पिता वृद्धः । माता अपि वृद्धा । किन्तु शुक्लधान्यस्य पवित्रता इदानीमपि तथैव मातुः समीपे । तथापि अहं तस्या वचनस्य तात्पर्यं न जाने ।

यदा पिता पुत्रनिमित्तं कन्यार्थं वा चिन्तितो भवति तदा माता तं बोधयति । पिता तु विरक्तो भवति —'किं वा करिष्यामि ? प्रातरुत्थाय आपणं गच्छामि । ताम्बुलानि विक्रीय रात्रौ नववादने प्रत्यागच्छामि । वृद्धोऽहं सजातः । पुत्रं शिक्षितमकारयम् । कन्यां च सम्यक् अपाठयम् । तथापि दुःखस्य मे समाप्तिर्नाभूत् । शिक्षितोऽपि पुत्रो मद्यपः । शिक्षिताऽपि कन्या पाकशाला-पशुः । सदैव ताम्बुले चूर्णं खदिरं च संयुज्य करो मे विकृतः' । समयेऽस्मिन् सर्वे नीरवश्रोतारः ।

एकदा मद्यं पीत्वा अनुजो मे कुतः आगतवान्। आपणात् पैसां चोरितवान् इति पिता तदुपरि क्रुद्ध आसीत्। तस्य वृत्तिमाक्षिप्य तमहं तिरस्कृतवती। किन्तु सहसा स माम आक्रान्तुम् उद्यतः। इत्थं दृष्ट्वा पिता तमताडयत्। सोऽपि पितरं ताडयितुम् आगतः। एतद्विलोक्य माता पाकशालातः ज्वलन्तं काष्ठमानीय तं मारयितुं प्रवृत्ता। पिता मे मातरम् अवारयत्। अहं नीरवा तटस्था च। नितः अनुजस्य संज्ञा प्रत्यागता। भृशं विलप्य स उपाधाने मुखं विलुप्य अशेत।

( ३ )

अनुजः इदानीं कर्मणि नियुक्तः किन्तु पैसां किं करोति वयं न जानीमहे। इतस्ततः परिभ्रम्य रात्रौ शयनार्थमागच्छति। पिता विरक्तो भवति। माताऽपि आत्मनः दुःखं वर्णयति ··· बोधयति। क्रमशः अनुजस्य परिवर्तनं लक्ष्यते। सोऽपि इदानीं मयि स्नेहवान्। वृद्धः पिता तु तथैव ताम्बुलानि विक्रेतुं आपणं गच्छति। माता च सद्यैव पाकशालापशुः। अह पुनः ···। हुँ···, कदा कदाचित् अहं पुलकमनुभवामि। मनश्चमे नाना कल्पयति। नाना स्वप्नानि पश्यति। माता सदैव मे



विवाहविषये व्यग्रा। कदा क्वचित् पाकशालायाम् अहम्

अन्यमनस्का भवामि। तद्‌विलोक्य माता मम कल्पनां बाधते — 'मिनि ! मिनि ! किं चिन्तयसि ? यथा कथंचित् तामहं इतस्ततो बोधयितुं यते। सा तु मम चिन्तायाः स्वरूपं सम्यक् अवगच्छति।

( ४ )

अद्य माता न स्वस्था। तथापि सा विश्रीव्रत-निमित्तं सर्वं सज्जीकरणाय आदिशति। द्रव्याणां यथासन्निधानं च निर्दिशति। अहं तया रीत्या प्रवर्त्ते। यदा शुक्लधान्यमानीय तदुपरि कलसं स्थापयामि तदा मातुर्वचनं स्मरामि—'मिनि ! त्वमपि शुक्लधान्यमिव शुद्धा पवित्रा च। त्वयि महती शक्तिः विद्यते। अनया एव सर्वं साधयितुं शक्नोषि। अस्याः संरक्षणं कर्तव्यम्।'

तथापि मद्बुद्दिष्टं वचनमिदं बोद्धुं न शक्नोमि कियती अहं पवित्रा··कियती च शक्तिमयी···। तथापि माता वदति—यत्र शक्तिः तत्र न साक्षात् प्रकटिता भवति। प्रकटनाय प्रयत्न आवश्यकः। चेष्टस्व···नूनम् आविष्करिष्यसि।

हँ···, अहं मिनी—संप्रति देहे मे कदा



कदाचित् पुलकमनुभवामि। क्वचिदपि स्पन्दनसमारोहे

अभिनवं हर्षमनुभवामि । किमर्थं न जाने । किमियं शुक्लधान्यस्य विभूतिः ? किमियं सा पवित्रा शक्तिः ??

—o—

# अदृश्यम्

दिनमासीत् यदा वयम् अभिसारं कृतवन्तः । अभिसारस्य समयः रात्रिः । रात्रिः दशोत्तरा प्रायशः । तदा भवद्द्वारे अन्नपात्राणि दृश्यमानानि आसन । ये तु अन्नपात्राणि स्थापयन्ति तस्म ते तदा अदृश्या आसन् । ते - - - वयम् - - - । ततो देवीघण्टाया अनुरणनं श्रूयते । ततो दृश्यन्ते अन्नपात्राणि पूर्णानि । भोजनाय अन्नं पर्याप्तम् । महती शान्तिः अस्माकं मनसि । मुखेऽस्माकं ध्वन्यमाना आसीत् प्रशस्तिः–दानं देहि, स्वर्गो मिलिष्यति । उपकारं कुरुष्व । कीर्तिः स्थास्यति ”

अद्यापि वयं जीवामः । ते वयम अदृश्यजातेः वंशधराः । रात्रिः सा वर्तते । अस्माकम् अभिसारोऽपि अव्याहतः । परमस्माकं हस्ते न अन्नपात्रम, अपितु धनपात्रं विराजते । अद्य कुत्राऽपि बाल्यविधवाया

विलोपो न श्रूयते । पतिव्रताया कलहो नाकर्ण्यते । अपुत्रिकस्य मन्त्रपाठो न प्रतिध्वन्यते । चौरस्य चरणं न शब्दायते । तस्करस्य वेशो न दृश्यते । कुक्कुरः शान्तः । प्रहरिणो गृहीतावसराः । सर्वमद्य अदृश्यम् । हतशेषा निशापक्षिणः अस्य साक्षिणः ।

इतः प्रभृति युद्धस्य आवश्यकता नास्ति । रक्तपातोऽपि नापेक्ष्यते । वयं जीवाणूनां निर्मातारः । अस्माभिः मक्षिकाः, कीटा, अन्ये च संकरकृमयः सृज्यन्ते । तेषु च नवरोगः संस्थाप्यते । अधुना क्रमशः परीक्षार्थं जीवाणवो विकीर्यन्ते । समय आयास्यति, यदा एतेषां पूर्णतया संक्रमणं सम्भवेत् । तदा केवलं गृहाणि स्थास्यन्ति । जीवा न जीवेयुः । प्रथममानवः धनुःशर-व्यवहारम् अभ्यसेत् ।

वयम् अदृश्याः । निशाभिसारः संप्रत्यपि अस्माकं वृत्तिः । द्वारं द्वारं च उपगम्यते अस्माभिः । सर्वम उन्मुक्तं दृश्यते । सर्वत्र नग्नता । पूजाया आवश्यकता नास्ति । नैवेद्यं हि स्वतः समर्प्यते । अन्नपात्रं नापेक्ष्यते । सपात्रप्रसादो हि सादरमर्प्यते । अद्य "त्वं मूर्तिमती असहायता । अहं च नग्नार्तभर्ता" ।

एतदर्थमस्माकं विज्ञापनध्वनिः—"नग्नोऽसि नग्नो भव। धनं मिलिष्यति। सुखं मिलिष्यति। ऐश्वर्यं लप्स्यते। देहयागं विधेहि। 'अपूर्वं' जनिष्यति।"

अवश्यं भवन्तः प्रक्ष्यन्ति—यदि चरण पादुकाया अन्तर्निविश्यते तर्हि किं कुष्ठव्याधिः निह्नूयेत ?

प्रश्नेऽस्मिन् वयमपि प्रतिप्रश्नं कुर्महे। —वसनपरिधाने किं नग्नता निह्नूयते ? भवान् किं निजनग्नत्वं न पश्यति ? तर्हि निजनग्नता कियद् दूरं समीक्षिता भवता ? नग्नार्तो भवान् मोक्षार्थम् अन्यान् नग्नीकरोति। तस्मिन्नेव समये निजनग्नतां कथं विस्मरति ? साधुतया निजत्वं समीक्ष्यताम्। ततो निःश्रेयसाधिगमः।

—*—

# तथापि तथागतः

तद्दिने गौतमः बुद्धरूपेण प्रत्यागतः। आशा आसीत्—यशोधारा पूर्ववत् तम् अभिनन्द्य अन्तःपुरं प्रापयिष्यति। पुत्रोऽपि तस्य आविष्कृतवाणीं राजपूज्यां कारयिष्यति। ततो महामिलनं भवेत्। साधना सार्था भविष्यति। ततो गौतमः यशोधरासमीपे उपविश्य

वर्णयिष्यति --- अनुभूतानि चत्वारि दृश्यानि... आविष्कृतानि चत्वारि आर्यसत्यानि ।

: दृश्यानां समाप्तिः कुत्र ?

: का वा सत्यस्य परिभाषा ?

: किं वा सर्वशेषसत्यम् ?

.........द्रुतगामिरेलः अद्य अत्रैव स्थास्यति । अग्रे सेतुः विपन्नः । तदुपरि गमनं निरुद्धमिति रेल-कार्यालयस्य निर्देशः । स्थानेऽस्मिन् नाद्यत्वे रेलो विरमति । परमगत्या विरतः । सेतुनिर्माणकाले स्थानमिदं कोलाहल-पूर्णमासीत् । तदानीं टीकन्'दा अत्र उपयन्त्री । अत्रत्या रेलसमयघोषिका मेरिना तस्य परिचिता । परिचिता नाम सहचरी अपि आसीत् । स्थानमिदमनुकल्प्य टीकन्'दा मनाग् अहसत् । रेलतश्च अवतीर्णः ।

: भग्ना आरमकी रिक्ता वर्तते । टीकन्'दा तामभिलक्ष्य आगतवान् । आरमकीं, आरमकीतलं, मेरिनां च मानसमानीय किंचित् प्रसन्नोऽभूत् । उपसांध्यं समयः । सूर्यः चकचकायते । तस्य अस्ताभा आरक्ता । आकाशे निःसङ्गः श्वेतजलदः स्थिरो दृश्यते । दिगन्तं

धूसरम् । एकाङ्गवृक्षे पक्षिणां कलरवः औदासीन्यं द्रढयति । शान्तो वातः । कति यात्रिणः अवतीर्य पार्श्वे यथासौख्यमालपन्ति । टीकन्'दा आत्मानं वदति—'अयं वृक्षः साक्षी । अस्य छायातले इयमारमकी कियती न प्राचीना ?'

: टीकन्'दा उपविश्य घोषणामेकां श्रुतवान् । अरे ! अयं खलु परिचितस्वरः । इयमपि परिचिता घोषणा । किमियं सा मेरिना…? सहसा पश्चात शिशोः क्रन्दनं तस्य भावनामबाधत । टीकन्'दा अपश्यत्—रुग्णा भिक्षुणी व्याकुला । विरक्ता सती शिशुं स्तन्यं पाययति । क्षीरं नायातीति शिशुः भृशं क्रन्दति । स्वयमपि सा रोगज्वालायां प्रदह्यते ।

: उपेक्ष्य स पुरोगतः । अपश्यत्—रावमुखरा जना एकत्रिताः । एको यायावरः मौनः । अन्य एकः रेलचक्रेण छिन्नः । देहात् मस्तकं पृथक वर्तते । जनाः पश्यन्ति वदन्ति च रेलस्थानतः कृष्णेन्धनं चोरयित्वा एते जीवन्ति । अद्य द्वयोः कलहः अभवत् । अयं तु प्रतिशोधाय रेलमार्गोपरि तं न्यक्षिपत् ।

: जुगुप्सया टीकन्'दा विवर्त्य अपश्यत्—

इयं सा वीथिः । एकदा अत्रापि स आसीत् । मेरिना च

अस्मिन् मार्गे यातायाता आसीत् । टीकन्'दा तामुद्दिश्य अग्रिमोऽभवत् । परमेवमत्रत्—वीथिः वृद्धा संजाता । तत्रत्यगृहाणि कुटीराणि एव । निश्चूर्ण भित्तयो नमनशीलाः । विवर्णानि च आवरणखर्पराणि । तथापि टीकन्'दा मेरिनाया वासस्थलीं निरचिनोत् ।

गृहस्य आलोकः द्वारमतिक्रम्य बहिः पतति ।

टीकन्'दा आलोके पादद्वयं संस्थाप्य प्राचीनप्रणयिभावं हृदये अजागरयत् । मेरिनायाः कुन्तलपुष्पमालोपरि दृष्टिमचारयत । दर्पणसम्मुखे दण्डायमाना मेरिना··· एका श्वेतस्वर्णप्रतिमा···विवसना सती समग्रप्रत्यङ्गं समीक्षते । मेरिनायाः छाया टीकन्'दाचरणं स्पृशति । टीकन्'दा क्रमशः तस्याः नग्नपृष्ठे कियत्कालं दृष्टिं संयुज्य निम्नस्थलं प्रत्यागमयत् । ततो दृष्टिः स्थिराऽभवत् । तत्र च प्रत्यफलत्—क्षयिष्णुनितम्बे कालः करालः । जघनं छलनाकातरम । नितम्बमस्तक केशयोश्च दूरत्वम् अमाप्यम् ।·· तर्हि किमियं सा मेरिना - - - ? वेशसज्जायां तथापि मग्ना- - - ?

टीकन्'दा विवर्तितः । उपनेत्रं च हस्ते धृत्वा वसनोपान्तेन परिष्कर्तुं प्रवृत्तः । अग्रे तस्य छाया प्रलम्बा- - - - - ।

# शीतलकंकणम्

मन्दिरात् प्रत्यागच्छति संध्या। पुतमनसि तस्याः पुण्यभावना । सायंतनी ज्योत्स्ना हिमनिभा। हस्तबन्धे आत्मानं बद्ध्वा सा त्वरते । पुष्पंतरुवीथी निर्जना । कति पुष्पाणि पादपे शोभन्ते । कियन्ति च मार्गस्थानि । पर्णान्तराले ज्योत्स्नाऽपि मार्गस्था । अन्तरालज्योत्स्नां पादक्षेपैः दलन्तीव सा आगच्छति। साहसा तस्या मार्गमवरुद्धवान स्वरूपः । चिकिताऽभवत् संध्या ।

——स्वरूप ! त्वमत्र - - - ?

संध्या भीता आसीत् ।

स्वरूपः निजभुजबन्धेन तामायत्तुं यतमान आसीत् ।

——नहि, नहि- - -, स्वरूप ! इदं पापम । विवाहात पूर्वमित्थं न कर्तव्यम । स्वरूपो विरतः । तथापि सकङ्कणं तस्या हस्तं स बहुसमयपर्यन्तं धृतवान् । अतितरलवचनेन संध्या तामतोषयत् । शनैः तस्या हस्तं मुक्तवान् स्वरूपः । अनिच्छया च प्रस्थितः ।

"कङ्कणं कियद्दुष्णं नासीत तदा ? हस्तश्च कियान् उत्तप्तो नासीत्" ? - - - - - - दीर्घश्वासमत्यजत् संध्या ।

गृहं निर्जनमद्य । संध्या त्रितलप्रासादोपरि एकाकिनी । मध्याह्नकर्म समाप्तम् । पर्यङ्के उपविश्य रात्रिभोजन-विषयं चिन्तयति सा । मनस्तु उदासीनम् । उपाधानोपरि मनाक् आरभ्य सा बहिः पश्यति । हिमसँकुलपर्वतः वाष्पमुद्वमति अदूरे । सहसा शीत-शोषिककङ्कणं तस्याः कपोले संलग्नम् । अतृप्तिषु तस्या हृदयं भाराक्रान्तम् ।

( २ )

स्वरूपस्य अद्यत्वे दर्शनं न मिलति । विवाहः संपन्नः । आमन्त्रणं प्राप्याऽपि स नागतः । तदनु एकदा साक्षात्कारः अभूत् । शतवारं अनुरुद्धः सः । परं किमपि न श्रुतवान् । तर्हि किमिच्छति सः ? स्नेहम्···? ममताम् ...? प्रेम...? सर्वं तु सर्वात्मना समर्पितम् । केवलमिदं मृतवतशरीरं धृत्वा अत्र निवसामि । तथापि कथं सः असन्तुष्टः ? अथवा सः शुष्कदेहे प्रणयी···?

: तद्रात्रौ ज्वरेण कम्पमान आसीत् स्वरूपः । अस्माकं गृहे शय्यारूढ आसीत् । तदानीं मां मम कनिष्ठा भगिनीं च विहाय अवकाशे सर्वे ग्रामं गतवन्तः । रात्रौ शीघ्रंणवृष्टिः अभूत् । औषधिनिमित्तं बहिर्गन्तुं नापारयम् । तमहं अपृच्छम—'किमावश्यकं, स्वरूप ! ?' मनाग् अवलोक्य मस्तकमालुड्य स मां न्यषेधत् । रात्रिः गभीरा अभूत । तापो वर्द्धितः । अहम् अतीव व्याकुला आसम् । निरुपाया अहं शनैरवोचम्—'स्वरूप !' नेत्रमुन्मील्य स माम् अपश्यत् । पुनरहं शनैरवदम्–'तापो वर्धते । अनिष्टं भवेत् । अतः त्वामालिङ्ग्य अहमत्र शयिष्ये' तव तापः मम देहं संचरिष्यति । ज्वरः शमिष्यति । सः अति प्रसन्नः अभूत् । परं न्यषेधत्—'नहि, विवाहात् पूर्वम् इदं पापम्' । वारिताऽपि अहं रात्रिपूर्णं तन्निकटे उपविष्टा । स च विचलित आसीत् । पुनर्भीत्याऽपि कम्पमान आसीत् । स कङ्कणं मम हस्तं धृत्वा व्याकुल आसीत् । - - - - - कियदुष्णं नासीत् तदेवं कङ्कणम्- - - ?

( ३ )

संध्या अद्य धनपतेः कुलवधूः । पतिः सदा धनागमव्यापारे मग्नः । धनं च परिवारकृते पुरुषार्थः

दुःखिता आसीत् संध्या। इदानीमपि स्वरूपं विस्मर्तुं न शक्नोति । स वा किमयाचत ? संध्या किं वा न दत्तवती ? कथं न दत्तवती ? अद्य वा किमर्थं दातुं न शक्नोति ? देहतृषा तु यत्र कुत्रापि चरितर्था भवेत् । कथमेतद् न बुध्यति स्वरूपः ? स्वरूप मुखे इदानीमपि संध्या इत्यक्षरद्वयम् । किन्तु किमर्थम् ? तमुपकर्तुं संध्यया: कर्तव्यं नास्ति वा ? संध्यायास्तु देहतृषा चरितार्था । सा वा कथं स्वरूपं न विस्मरति ?

संध्या अन्वभवत्---कपोललग्नकङ्कणमधुना अधिकमुत्तप्तम् । सा तथापि तत्र माधुर्यमाहर्तुं न शक्नोति ।

—*—

# प्रतिबिम्बम्

—अनेकं वक्तव्यमासीत्, अशेष ! परमिदानीं वक्तुं न शक्यते । असमये त्वमुपगतः । तव स्थितिः अवश्यं मे पूर्वं ज्ञातव्या आसीत् ।

—कथं वर्तसे ?

—अवश्यं वदिष्यामि ।

—भवतु, किंचित् चायपानं कुरु ।

—पश्य, अशेष ! यदाऽहं मात्रा भगिन्या च सह विपण्यां विहरामि तदा विपणीतः कतिसरलदृष्टय आगम्य मम मातरि भगिन्युपरि पतन्ति । सा दृष्टिः यदा मदुपरि पतति तदा तीव्रा कुटिला च भवति । पुनश्च मयि बाधां प्राप्य प्रत्यावर्तते । अनयोः देहरक्षित्वेन गौरवभावना मे बलवत्तरा इदानीमपि । किन्तु - - -

—किं चिन्त्यते ?

—किमेतेषां माता नास्ति ? भगिनी नास्ति ! भ्रातरः न सन्ति ?

—सर्वे सन्ति ।

—किन्तु कथमेते अन्येषां मार्गरोधं कुर्वन्ति ?

—काऽत्र मार्गरोधवार्ता ? प्रवृत्तिरेषा भूतानाम् ।

—तर्हि किं बलं यस्य सर्वं तस्य ?

—नहि बुद्धिर्यस्य सर्वं तस्य ।

—तर्हि किमेते बुद्धिमन्तः ?

—त्वमेव निर्बोधः । कथमेतत् चिन्तयसि ? इयं नाम युगगतिः । वस्तुतः त्वमुन्मादः संजातः ।

—भवेत्...। जानेनाहं कथं सर्वे मामित्थं चिन्तयन्ति । किमर्थं वा मम कथायां गुरुत्वं नास्ति । सत्यम्..., न कोऽपि कमपि बोद्धुं प्रभवति । अद्य तु यं कमपि सम्यक् विचारयितुं पर्याप्तानि कारणानि न मिलन्ति । अपितु आक्षेप्तुं कारणानि पुष्कलानि ।

—अभिप्रायो नावगतः ।

—मम प्रतिबिम्बं नाहम् अन्यत्र पश्यामि । किं संसारस्य सर्वाणि अपि दर्पणानि मलिनानि ?

—अरे ! कथय वक्तव्यम् ।

—एकदा रुग्णपत्न्या सह अहं चिकित्सायनं गतवान् । तदा तस्या विकलमुखं स्कन्धे मे निहतमासीत् ।

तथापि विपणीतः शीतलदृष्टयः आगम्य तस्या शाटीकामपिबन । अहं तु विपणीवीथिषु दृष्टिं संचारयन् आसम् ।

—ततः ··· ?

—ततः चिकित्सालयं प्राप्तः । अनेकानुरोधेन रोगिशय्या आसादिता । किन्तु न काऽपि सेविका तत्र आगता । कियत्कालानन्तरं एका सेविका आगत्य केवलं दण्डायमाना अभूत । तस्या वसनं विलोक्य मनसि मे शान्तिः समजनि । परं तस्या मुखतः मया आविष्कृतम् — सेवाकार्पण्यम् ··· मिथ्याभिजात्यम् ··· । पुनश्च मम दैन्यनिमित्तं सा उपहसन्ती आसीत् । मम आत्मगौरवभावना नष्टा । तस्या एव प्रतिबिम्बं सर्वत्र इदानीं पश्यामि ।

—अरे ! काऽत्र नूतनता ?

—तदर्थमहम् आगतः । किंचित् धनमावश्यकम् ।

—अरे ! कथमेतत् पूर्वं नोक्तम् । सद्य एव अनुजस्य सेवावृत्तिनिमित्तं सर्वं प्रदत्तम् । अन्यथा··· ?

—भवतु··· । श्मशानपर्यन्तं जना उपहसिष्यन्ति ।

कियद्दूरं वा अस्ति ?

दीनेशः निर्गतः ।

अशेष आत्मगतमवदत् ।

—नीतिमनुसृत्य त्वमधोगामी भविष्यसि। आदर्शम् अन्विष्यन् त्वं नरकं गमिष्यसि। तव प्रतिबिम्ब निमित्तमत्र सर्वं शिलातलम् ।

अशेषः अवलोकयति । दीनेशः अपसरति ।

सभाजनगृहस्य दर्पणे दीनेशस्य पश्चाद् भागः तथापि-प्रतिबिम्बितो वर्तते ।

—*—

## स्नायुग्रन्थिः

लोमकूपाः पूर्वाह्णसूर्यस्य आदिरश्मिमाहरन्ति। अतनुः प्रकोष्ठे उपविष्टः। वातायनम उन्मुक्तम् । पार्श्वे दण्डायमाना तन्द्रा । पितुः मस्तके धवलकेशान् संगृह्णाति सा । अवकाशवासरीयामाश्वस्तिमनुभवति अतनुः ।

तन्द्रा तस्य कन्या···पञ्चवर्षीया । तस्या मुखे माता इति शब्दो नागतः । पिता एव सर्वम । सा दुःखं

किमिति न जानाति । पिताकन्ययोः कति दिनानि हासपरिहासेन विगतानि । पितुः मनसो दुःखम् आकलयितुं तस्या वयो नागतम् । नागमिष्यति च...।

उत्पला नास्ति । वराकी चिराय मुक्ता । इदानीं सा आकाशे अवश्यं तारका स्यात् । तस्याः प्रत्यावर्तनं तु सम्भावनातले दर्शनमेव । अद्य तु विवाह-पूर्वा तस्याः कैशोरप्रतिकृतिः यत्नेन संचिता । तया सह कतिसंभुक्तमुहूर्तानां स्मृतिः स्नायुषु ग्रन्थिबद्धा । कन्यार्थं च तस्याः कति व्यवहारा अभ्यस्ता एव- - -।

तन्द्रा एकमेकं पलितकेशमुत्पाट्य पितुः हस्ते स्थापयति । हस्तस्तु प्रसारित एव । कालिकपवनेन तस्मात् केशा उड्डीयन्ते । निविष्टो वर्तते अतनुः- - -।

केन प्रकारेण वा वदिष्यति–तस्या माता सुन्दरी आसीत् । इदानीं तु तस्याः कैशोरप्रतिकृतिं स्वयं स विश्वस्तुं न प्रभवति । कन्या वा केनोपायेन तां जननीरूपेण ग्रहीष्यति ? उत्पला अतीव उदारा- - - नितरां स्नेहिनी - - -जन्मतो जननी आसीत् इति कीदृशं वा प्रतिपादयिष्यतिः ?

संप्रति अभियोगं श्रोतुं न कोऽपि तिष्ठति। मनोव्यथां च न कोऽपि सहानुभवति। आत्मन उग्रतां व्याकुलतां वा शमयितुं न कोऽपि जन उत्पला भवति। इदानीमतनुः प्रश्नान् रचयति। दुःखानि आत्मस्थी करोति। हास्यानि अन्तर्नमयति। अश्रूणि च तमसि विसृजति। प्रत्युत्तरं नास्ति --- परिपृच्छा नास्ति --- प्रतिहास्यं नास्ति --- प्रतिवेदनमपि नास्ति। एतन्निमित्तं उत्पला एव कारणमिति सा कयारीत्या कन्यां बोधयिष्यति? अतनूत्पलयोः स्पर्शसम्भूता तन्द्राऽपि तयोः स्पर्शान्तरमिति वा कमाधारीकृत्य विश्लेषयिष्यति?

एकदा तन्द्राऽपि प्रदेया भविष्यति। स पुनः एकाकी भविष्यति। गृहेऽस्मिन्नेव मस्तकस्य समस्तकेशा धवला भविष्यन्ति। किन्तु उत्पलायाः प्रतिकृतिः---? बाष्पाभिभूत आसीत् अतनुः।

सहसा तन्द्रा उच्चैरहसत्। करे तस्या अलक्ष्योत्पाटिताः कति कृष्णकेशा निहिता आसन्। एतदर्थं हसन्ती सा निजत्रुटिं दर्शयितुम् उपक्रान्ता आसीत्।

अतनुः कन्याहासे उत्पलायाः सानन्दपरिहासम् आविष्कुर्वन् विस्मित आसित् ।

—*—

# अजातिः

अयं खर्जूरः सभ्यसाक्षी- - - - - - - - - -

निजशाखां परित्यज्य स्वयं सोपानायितः ।

रसं पाययितुं च सोपानमयः संजातः । तथापि न कोऽपि सन्तुष्टः । खोदनं- - - खोदनं - - - पुनरुत्खोदनम् । ततो रसनिक्षरणम । अनेन सरल वक्रः संजातः । तथापि खननम् - - - तथापि हननम् । वक्रतायाः पुनः कः परिणामः ? अग्रं तु नास्ति । अग्रिमता पुनः किम्- - - ? अग्रगतिश्च कस्यां दिशि ?

आदौ यदाऽयं शाखां प्रशाखां च प्रसारितवान् तदा अपश्यत्——तस्य बहवः सम्बन्धिनः सन्ति । तदा अचिन्तयत्—सर्वे परस्परं सहायिष्यन्ते । सृष्टिषु हि सर्वे स्वयं पर्याप्ताः । केवलं प्रगतये सर्वेषां सम्बन्धः

आवश्यकः। एतदर्थं स कण्टकान् अपि अपकाराय न विनियुक्तवान। सम्बन्धिनः तस्य देहे सोपानानि निर्मितवन्तः तथापि स नाभियुक्तवान्। तदनु तस्य रसपानेन सम्बन्धिन उन्मता अभवन। तस्य च मेरुदण्डेन सभ्यतां निर्मापितवन्तः। इदनीं ते जातिमन्तः --- आढ्यतराः --- सौधशालिनः सभ्यपतयः। आत्मतोषणेन परिशोषणं तेषां कौलिन्यम्। यौनोत्सवः तेषां च अग्रिमकार्यसूची।

तथापि तेषां भाषया खर्जूरः अग्रिमः। किंतु हननेन अग्रं तस्य अधोगम्। एतदर्थम् अजातिः--- न वृक्षः --- केवलः स्थाणुः --- स्थविरः--- स्थावरः। शोषणत्वं च सम्बन्धः तस्मिन्।

इतः परं खर्जूरः स्वयमुत्पतिष्यति। सम्बन्धिन आगमिष्यन्ति। निजमध्ये शेषांशं वितरिष्यन्ति। वितरणकलहेषु खर्जूरः मोक्षं प्राप्स्यति।

ततो निर्वाचनं भविष्यति। रसज्ञः नेता भवेत्। खर्जूरगर्ते वीजं निक्षेप्स्यति। अङ्कुरः पादपो भवेत्। यदाऽयं वर्धिष्यते तदा सम्बन्धिनः रसपानाय आगमिष्यन्ति। पादपो वा किं कुर्यात्? अतिबहुना

सर्वान् निषेधयितुं यतेत । तदानीमेव सम्बन्धिन तम् अजातित्वेन घोषयेयुः। ततः केचन प्रायश्चित्ताय तं प्रचोदयेयुः। रस एव प्रायश्चित्ताय द्रव्यं भवेत्।

फलं कुत्र ? छाया कुत्र ? परं न कोऽपि एतत् प्राथितवान ? आकुञ्चनचरिते पादस्तु आहुतिमेव निजसात्करिष्यति।

—o—

## अस्पृश्यवासरः

लुसि !

स्वस्ति। अद्य अहमत्र अतिथिः । अपूर्वा संगोष्ठी मम सत्कारे मग्ना। अतिथिशाला इयं नितरां रमणीया। इदानीं तु रात्रिः द्वादशोत्तरा । मन्ये तत्र दिनं स्यात्। हाँ- - -, अत्र देहसज्जार्थम् अदृष्टपूर्वं द्रव्यमुपलभ्यते । अशासे, श्वः नर्तने अधिकतया मनोरमा स्याम्। श्वः प्रभृति नृत्यमारप्स्यते। अन्यत अन्यदा। इदानीं शयितुं गच्छामि ॥ इति ॥

स्नेहिनी जननी

इन्द्रावती।

पत्रं पठित्वा लुसी मातृगौरवे उत्फुल्ला संजाता। इत्थं सदा सा पत्रं प्राप्नोति। परमनेक-दिनेभ्यः मात्रा सह साक्षात् संपर्को नास्ति। मातृष्वसुः गृहे निवसति। पिता कुत्र, न जानाति। माता तु देशस्य मान्या नर्तकी इति जानाति। सा सदा देशे विदेशे च परिभ्रमति। केवलं पत्रं प्रेषयति। इत्थं बहुपत्राणि सा सयत्नं संचितवती।

अद्य सा पुनरेकं पत्रं प्राप्तवती।

लुसि !

मङ्गलम्। अहमधुना अतिथिनिवासे। निद्रा नायाति इति पत्रं लिखामि। अल्पदिनाभ्यन्तरे प्रत्यागमिष्यामि। इदानीमत्र मनो न रमते। अत्र हि जीवनधारणस्पर्धा महती। सर्वत्र वैपणीकता। सर्वस्य मूल्यं प्रतिदिनं परिवर्तते। श्रेयो वा प्रेयो वा न किमपि विद्यते। 'का ते कान्ता कस्ते पुत्र' इति गीतेन सह अत्र नृत्यामि। संसारेऽस्मिन् न कोऽपि कस्य—इति प्रत्यक्ष-मनुभवामि। जीवनं नाम अत्र साक्षात् विपणी। आरम्भे अनाथशाला। शेषे च वृद्धनिवासः। अयमेव विदेशः। अधिकं न वर्णयामि। क्लान्तिः अनुभूयते। प्रत्यक्षमन्यत्।

॥ इति ॥

स्नेहिनी जननी इन्द्रावती

तदा प्रभृति हर्षोत्फुल्ला लुसी देवं पूजयति। शुभं मनस्यति। मातुर्मङ्गलं याचते। शुभागमनं च आशंसति।

लुसी अद्य अस्पृश्या।

मातृष्वसा अवदत्—अद्य कुत्राऽपि न गन्तव्यम्। किमपि विकृतं न चिन्तनीयम। अस्माकं इष्टदेवो वर्तते। तत्र दीपः ज्वलति। प्रकोष्ठस्य एकपार्श्वे उपविश। दीपमभिलक्ष्य भगवन्तं चिन्तय। अथवा धर्मग्रन्थं पठ। लुसी शुद्धा मुकुलितकेशा च तथा करोति।

कियत्क्षणानन्तरं मातृष्वसा व्यज्ञापयत्—'लुसि! माता समागता। रेलविरतौ जनाः तां वर्धापयन्ति।' लुसी व्यग्रा अभवत्। तां च द्रष्टुमुत्सुका आसीत्।

इन्द्रावती गृहं प्राप्ता। साऽपि कन्यां द्रष्टुं व्याकुला। त्वरया धावन्ती सा देवप्रकोष्ठं प्रवेष्टुमुपक्रान्ता। अवहिततया मातृष्वसा तां वारितवती। चकिता इन्द्रावती देवद्वारे प्रतीक्षमाणा अतिष्ठत्। मातृष्वसा आकारितवती—'लुसि! बहिरागच्छ। माता प्रतीक्षते।' लुसीं दृष्ट्वा इन्द्रावती 'हेलो, लुसि!' इति संबोधयन्ती तामालिङ्गितुं प्रवृत्ता

लुसी तां दृढतया न्यषेधत् । विस्मिता इन्द्रावती विरता । मनसा च गुञ्जनव्यापृता—लुसी तस्याः साक्षात् पुराणकथिता देवी··· शौवा···पुण्या । पुण्यतमा भवितुं च शृङ्गारपूजां विदधाति । हरिद्राकज्ज्वल-कुङ्कुमादिषु विभूषिता सा साक्षात् रतिमत्ता तापसी ।

इन्द्रावती आत्मनो लघुतामनुभूय किंचित् नम्राऽभवत्—स्वयं सा किं प्राप्तवती ? मांसलसभिनन्दनम् ···रतिकुटिलकटाक्षनिकरम् ··· प्रशंसाध्वनिनिवहम् ··· पुनश्च अन्तराले मधुविपणी···मधुशाला···मधुशयनम् । एतावन्नु ?

अस्पृश्या लुसी प्रणतवती ।

तामुदधर्तुम् आलिङ्गितुं च मातुः साहसं नासीत् । इदानीमिन्द्रावती अनुभवति——अस्पृश्यवासरस्य माधुर्यं कियत् ? मातृष्वसा आकारयति–'चल ! भगिनि ! चिन्तायां वा कमस्ति ? इयमस्माकं परम्परा । त्वमिदानीं तु···।चल, भोजनं करिष्यामः । लुसि ! दीपो निर्वाति वा, पश्य' ।

लुसी देवस्थानं प्रविष्टा ।

तस्या आलम्बकेशगुच्छं विलोक्य इन्द्रावती स्तब्धा–कृत्रिमतासु उत्कर्षं प्रमाणीकर्तुं न शक्यते। तत्र श्रेयो नाम बन्ध्यारूपता‥विषाक्तता- - - ।

भगिनी भोजनं सज्जीकृत्य आकारितवती ।

लुसी अपि अन्वनयत् ।

—याहि, मातः ! भोजनं कुरु ।

इन्द्रावतीनयने तु नृत्यरत आसीत् विदेशस्य संग्रहालयः यत्र नृत्यशीलानां नूपुराणि भूषणानि च सगृहीतानि सन्ति ।

लुसी पुनरुत्थाय तामन्वनयत् ।

—याहि, मातः !

इन्द्रावती कन्याया अपूर्वस्नेहमनुभूय विस्मयमाना आसीत्—निर्दिष्टसमयो यदा अतिक्रामति तदा वस्तुनः प्रकृतरहस्यं निह्नूयते । तिदानीं यदि नाविष्कर्तुं शक्यते, कदापि तन्नाविष्क्रियते ।

इन्द्रावतीनेत्रतः अश्रुबिन्दुद्वयं न्यगलत् ।

—*—

# जलाहुतिः

मध्याह्नं शीतलम् ।
तद्दिने गोपालचन्द्रः केन्द्रच्युत आसीत् । अपवित्रं तद्घटनं कथयित्वा स पवित्रो भविष्यतीति चिन्तित आसीत् । विषयं स वर्णितवान् । मुखमण्डलं तस्य विकृतमासीत् ।

अहं तु अनुभवन् आसम्---जीवने बहुकथाः आद्रियन्ते । परं निजयितुं न शक्यन्ते ।

( २ )

शर्मिष्ठा गोपालचन्द्रस्य भ्रातृजाया । विवाहतः प्रागपि सा अतृप्तमधुकरी । अद्यापि ध्यानपथे तस्याः कियन्ति चारुचुम्बनानि- - -कति च भुजबन्धनानि- -। मादकीया तृप्तिः तस्याः स्वैरकामना । विवाहतः परमपि सैव वृत्तिः- - -।

भ्रातृनिकटे बाल्यादेव गोपालचन्द्रः संवर्धितः । प्राप्ते तु षोड़षवर्षे तस्य प्रवृत्ति शर्मिष्ठा एव

कलुषितवती। तस्य च देहान्दोलने सैव मन्थनी अभूत्। तदा गोपालचन्द्रस्य अनुभवः अपक्व आसीत्। स तु पठनार्थम् अन्यत्र गतवान्।

अग्निः न कदाचित जलाहुतौ तृप्यति- - - - -।

कृत्रिमप्रतीक्षासु स्नेहच्छलनासु च पतिः क्रीडनकमासीत्। स च पत्नीमेव प्रीणयितुं तत्पर आसीत्। परं गृहस्थभृत्यस्य कर्मप्रवाहे शर्मिष्ठायाः प्रीतिधारा धारान्तरमाश्रिता। सा दहनस्य साक्षातमूर्तिः। ज्वलनस्य अभिन्नप्रतिमा। अद्यत्वे तु इयं सामान्यधारा– याच्ञा संक्रामकतृष्णा। सा च भृत्ये संक्रमिता। भृत्यवचने प्रभुपत्नी उदारा - - - दानशीला - - -। प्रभू समीपे प्रभुपत्नीस्तवगानं तु श्रेयसे एव। प्रशंसावचनेन क्रमशः भृत्यः रङ्गमञ्चे अभिनेता अभवत्।

गोपालचन्द्रः अद्य पञ्चविंशतिवर्षीयः। भ्रातृजायायाः व्यवहारे स खिन्नः। तदेव अग्रजस्य निकटे स विज्ञापितवान्। प्रभुः उदतरत्––अहं गृहपतिः। गृहस्य विषये सर्वमहं जाने। नाधिकं वक्तव्यम्।

गोपालचन्द्रः आत्मना विदीर्णः।

शर्मिष्ठा तु छलनाचतुरा।

एकदा गृहपतिः अनुपस्थितः। पर्यङ्के उपविश्य गोपालचन्द्र उपन्यास पठति। शर्मिष्ठा प्रविष्टा। निकटे च उपविष्टा। सतृष्णनयने तस्या आवहनमुद्रा। सा हस्तं प्रसारितवती। गोपालचन्द्र अविचार्य्य तस्याः करमधरत्। शर्मिष्ठा उच्चैः आक्रोशत्।

सायं गृहपतिः समागतः। शर्मिष्ठा विलप्य न्यवेदयत्—'अद्य सर्वनाशः संजातः। गोपालः- -माम्- - सर्वनाशः - - - सर्वनाशः' - - -।' पत्नीवचनं शिरसि निधाय गृहपतिः गोपालचन्द्रं बहिष्कृतवान्। प्रतिवादमकृत्वैव गोपालचन्द्रः गृहात् निर्गतः।

( ३ )

गोपालचन्द्रः वर्णनां समापितवान्।

मनसि तस्य अशान्तिः- - -कलुषा स्मृतिश्च। तस्य अनुतप्त वचने—'मया जलाहुतिः केवलं समर्पिता' इति निर्यासः।

किंतु अहमिदानीं गोपालचन्द्रं किम्भूतं चिन्तयिष्यामि ?

—o—

# न याहि वामन, रे- - -!

अद्य वार्ता प्राप्ता––'माता नितरामस्वस्था' गृहे न कोऽपि अस्ति। सर्वे पुत्रा विदेशे। माता तु पुरातनगृहस्य भग्नांशं विलोक विलोकं वृद्धा अभवत्। पुनरद्य एकस्मिन् भग्नप्रकोष्ठे शय्याशायिनी। कुत्राऽपि गन्तुं नेच्छति। तस्मिन्नेव भग्नांशे तस्या दृष्टिः लोलुपा। मनः दुःखायते।

भग्नांशस्य क्षयिष्णुशिलायां तस्या ममता कियती न प्राचीना- - -?

सहसा पत्नी उपस्थिता। सत्वरं च अभियोगमुखेन उक्तवती।

––किमत्र क्रियते ? प्रतिदिनं पाकः- - -गृहपरिष्करणम् - - -सन्ततिसेवा- - -। अन्यत् किमपि नास्ति ? किमहं पशुः ? युष्माकं सेवायामेव नियुक्ता ? किं मम मनसः कर्मणो वा परिवर्तनं नापेक्ष्यते ?

इदं तु पत्नीवचने दैनिकः अभियोगः। अभ्यस्तभर्त्सनाऽपि मम पुराणधारा।

अद्य पुनः वार्ता लब्धा कनिष्ठभ्राता गृहात् सर्वस्वं गृहीत्वा कुत्र पलायितः। माता मुमूर्षुभावेन शेषश्वासं प्रतीक्षते। स्थितिरियं तस्य कृते सुयोगः अभवत्। भग्नांशस्य प्रतीकं वस्तु चौरसात् अभूत्। भग्नांशस्य कथापेटिकायामिदानीं वल्मीका विचरन्ति। साऽपि प्रयास्यति।

मासो न समाप्तः। अग्रिमवेतनं को वा दास्यति? मन उत्कण्ठितं भवति—यदि धनं लभ्येत तर्हि गत्वा मातुरवस्थां सकृद् विलोक्य प्रत्यागच्छेयम्।

किन्तु तन्न सम्भवति।

सहसा पत्नी उपस्थिता।

—किं चिन्तयसि? चलचचत्र गन्तव्यं नु?

अहं नीरवः।

—किमभूत्? न वदसि, किमर्थम्?

—कनिष्ठः गृहात् सर्वं चोरयित्वा पलायितः।

—एतत्तु मया पूर्वमुक्तम्—स एकदा नूनमित्थं करिष्यति। तस्य विताडनं कुरु। परं वचनं मे न श्रुतम्। प्रश्रयो दत्तः। यथेच्छम् आचरितम्। तत्

फलं त्वद विना अन्यः को वा भुञ्जीत ? किंतु निष्कारणमहमत्र दग्धा भवामि। एतादृशं परिवारं संप्राप्य धिग् मे जीवनम्।

भग्नांशस्य अङ्कुरोऽहं केवलमङ्कुरचिन्तायां मग्नः। जीवनस्य स्वादो नानुभूतः। कलहे दिवसा गताः। कुक्कुर इव रोटिकानिमित्तम् इतस्ततः परिभ्रान्तम्। तथापि पादलेहनं न समाप्तम्। संप्रति अन्तःकरणे मे विखण्डितो भावबन्धः।

सन्ततिद्वयी दशदिनेभ्यः पीडिता। औषधि-दानेऽपि रोग नोपशाम्यति। अतो न किमपि मे रोचते। रोगोपशमनाय चिकित्सकमुपगतवान। मन्दिरं गतवान्। गृहे च इष्टदेवीं पूजितवान्···प्रार्थितवान्! किं वा पुनः कर्तुं शक्यते ? इतः सन्ततिः पीड़िता। ततो माता व्याधिग्रस्ता। मध्ये अहं निष्कर्मा उपासकः। सम्मुखे पत्नी मे साक्षात् चिरनिष्पूजिता चण्डी। पश्चाद् भ्राता मे मूर्तिमान् शनिः।

दिवसस्य प्रथमप्रहरः।

औषधिनिमित्तमहं विपणीं प्रस्थितः। गृहे तु दिनद्वयात् उपवासः। तदेव मनसि निधाय प्रत्यागच्छामि। तस्मिन् समये एको भिक्षुः मामन्वसरत्।

—बाबो ! दशपैसा देहि ।

—अरे ! मन्निकटे नास्ति ।

—नाहि, भवान् बाबुः । भवान् साहेव् ।

—अरे ! नहि । इदानीं नास्ति । श्वः नेष्यसि । याहि···

— नहि, मालिक् !

इत्थं 'बाबो !' 'साहेव् !' 'मालिक् !' सम्बोधयन् स मामनुसृत्य आगतः ।

अहं तु चकितः ।

गृहद्वारे पुलिस गर्जति ।

—एते चौराः । अन्यद्वारा चोरयन्ति । स्वयं साधवो भूत्वा गृहे उपविशन्ति । धन्या अंशग्राहिणः ? किमर्थं न मृताः ?

—किमभूत् ? मान्य !

—किं भवेत् ? भवतः भ्राता अस्य जनस्य आपणात् सर्वं गृहीत्वा पलायितः । तत् सर्वं भवान् दास्यति । अन्यथा चलतु कारागृहम् ।

समयेऽस्मिम् परिचितः पत्रदः संप्राप्तः । द्वारे जनसमागमं विलोक्य स भीतः । संकुचितभावेन

पत्रमेकं प्रसारितवान् । विषयस्तु ज्ञातपूर्व आसीत् । पत्रं गृहीत्वा अहं गृहं प्राविशम् । जननीदत्ता(बहुपूर्वं संचिता) अवशिष्टश्रद्धामुद्राः पुलिस् हस्तेरहसि समर्पिता । गृहे पत्नी विलपति । चण्डी अपि सा जननी । मुखरा अपि सा पत्नी । अप्रिया अपि सा हितैषिणी ।

सनमस्कारं पुलिस् प्रस्थितः । तटस्थो भिक्षुः शेषवारं सकृत् मां संपश्यन् प्रस्थितः । तस्य प्रस्थानमार्गं निरीक्ष्य अहं दण्डायमानः । मनसि मे--स एव चौरभ्राता मातुः मुखे अग्नि समर्पयति । गृहस्य भग्नशिला तथैव क्षयशीला । श्रवणे मे मातुः प्रथम वात्सल्यम्--'न याहि, वामन, रे ! मामितो विहाय,'

जीवनजाह्नवीतीरे क्षणैकस्य विधूननमिदम् अद्यापि विषादमुद्धरति ।

—*—

# लुम्बिनी

कार्यालयस्य द्वारम् ।

अधीक्षकस्य आदेशं प्रतीक्षते लुम्बिनी ।

साक्षात्काराय आवेदितम् । परम् आदेशो न लब्धः । अधीक्षको व्यापृतः । लुम्बिनी तु अधीरा । गृहे रुग्णः पतिः । तन्निकटे सन्तानद्वयं यथा कथंचित् व्यवस्थाप्य अत्र आगता । तस्या हि दर्शनमिच्छति अधीक्षक । तस्या विरुद्धे अभियोगो वर्तते ।

पीडितपतिः इदानीं चिकित्सावकाशं गृहीत्वा गृहे शय्याशायी । औषधिनिमित्तं धनमपेक्ष्यते । इयद्धनं वा कुत आयास्यति । उभयस्य वृत्तिः हि शिक्षकता । अत्र सर्वेषाम् अयो वर्धते । शिक्षक वराकस्य तु यथा तथा । संप्रति लुम्बिनीवेतनमपि न मिलति । तस्या विरुद्धे अ भयोगोऽस्ति ।

दशमासा व्यतीताः । अनुरोधः - - - निवेदनम् - - - आवेदनं - - - सर्वं निष्फलमभूत् । असन्ना: तस्या

दर्शनमवशिष्यते । लुम्बिनी नितरामातुरा । दशमासा विगताः । तथापि प्रसवस्य सूचना नास्ति । - - - - - - - प्रतीक्षायां विरक्ता लुम्बिनी कर्यालयस्य अन्तःकरणे दृष्टिमपातयत् । सहसा आत्मरूपा ललना नेत्रपथमागता । लुम्बिनीमनसि मनाक् आत्मीयता समजनि । सा सविनयमपृच्छत् ।

——भगिनि- - - ! मम वेतनं किमर्थं न दीयते ?

सह लिपिकैः आलापमग्ना ललना किमपि नाश्रृणोत् । तथापि लुम्बिनी पुनर्वारमपृच्छत् । लिपिका सा विरक्तभावेन अवदत् ।

——प्रथमतो बहिः प्रतीक्षस्व । यद् भवेत् तत् पत्रद्वारा ज्ञापयिष्यामि ।

लुम्बिनी आहता सर्पिणीव अभूत् ।

परमात्मानं संयम्य बहिरागता । खिन्ने मनसि तस्याः सैव लिपिका तथापि विरक्ता । किं वा इयमुपार्जयति ? इयान् अस्या दर्पः ? एकस्य उपार्जनं भुक्त्वा तस्य च अर्जनेन मनोहराणि वसनानि परिधाय आत्मानम् अन्यस्मै समर्पयितुं कियतप्रगल्भा न ललनाः ?

लुम्बिनी बहिरुपविष्टा ।

तस्या दुर्दशामवलोक्य कश्चित् तत्रत्य सेवकः समदुःखापन्न संजातः । स शनैरवदत् ।

—भगिनि ! दुःखस्य कारणं भवत्याः सहकर्मिण एव । ते अत्र आगत्य अभियोगं कृतवन्तः ।

लुम्बिनी सुदीर्घं निश्वस्य व्यथामपासारयत् ।

—किं वा कर्तव्यम् ? सहयोगिनस्तु सहभोगिन एव । अद्यत्वे सहयोगी न कस्य उत्कर्षमिच्छति । यादव यावन्निकटे धनं तावत् ते सहयोगिनः ।

—अत्राऽपि वचनेन किमपि न सिद्ध्यति । प्रतिकार्यं धनमपेक्ष्यते । लिपिकतः अधीक्षकपर्यन्तं सर्वेषां प्रतिकार्यं धनभागो वर्त्तते ।

—युष्माकम् ?

—वयं तु दयाभाजः ।

विहस्य सेवकः अन्तःप्रविष्टः ।

लुम्बिनी मनाक् मानसं शिथिलीकृतवती । किंतु चिन्तायां तस्याः केवलं धनार्थं धनमपेक्ष्यते इति सेवकवाणी शाश्वती ।

लुम्बिनी एका त्यागमूला प्रकृतिः। विवाहतः प्राक् परमपि च त्याग एव जीवने तस्या आदर्शः। एतदर्थं देहे अलङ्कारो नास्ति। मनसि च वेशसज्जाया औत्सुक्यं नास्ति। निसर्गसौन्दर्यमिदानीं क्षयशीलम्। तथापि तस्याः चिन्ता नास्ति। सर्वं परित्यज्य सा पतिसन्तानिकटे सर्वस्वायते। किन्तु दशमासवेतन-निमित्तं कथं किमपि त्यक्तुं न प्रभवति ?

लुम्बिनी आत्मना विप्लविनी। पूर्वाह्णः-मधुना अपराह्णमभूत्। तथापि अधीक्षकस्य दर्शनादेशो न मिलति। सोऽपि धनमिच्छति ? विषण्णा लुम्बिनी अन्वभवत्—तस्या मरणं निकटायते। उपायो नास्ति। त्यागाय केवलं जीवनमवशिष्यते।

बहुसमयानन्तरं सेवक उपगम्य अवदत्। —भवत्या विरुद्धे अभियोगः अस्ति। तस्य विचार आवश्यकः। परम् अधुना अधीक्षको व्यापृतः। पञ्चवादने कार्यालयकर्म समाप्य स विचारमारप्स्यते। विचारे अवश्यं विलम्बो भवेत्। तदर्थं न किमपि चिन्तयतु भवती। सर्वा सुविधा अत्र अस्ति। रात्रियापने न किमपि असौकर्यं भवेत्।

वचनमिदं निशम्य लुम्बिनी अन्वभवत्---सा यथा निशार्धस्य देहजीविनी। तस्या हृदयं विदीर्णम्। सा आत्मानमपृच्छत्---किमियं शिक्षा ? किमिदं शैक्षिकं शासनम् ? किमियं शिक्षणसेवा ? धन्या इयं रतिसर्वस्वा सेवा। लुम्बिनी आत्मानं धिक्कृतवती।

तत उत्थाय सा यानस्थानम् अभिप्रस्थिता। आसन्नगोधूलिः तदीयनयने लोतकमभरत्। सा यानस्य अन्तःप्रविष्टा उपविष्टा च। कति लोतकबिन्दवः कपोलतः विगल्य तस्या हस्ते पिण्डीभूताः। तत्र सा अन्वभवत्--स्वयं सा निकटमयी। एकतो जरा, व्याधिः, मरणं च निकटायन्ते। अन्यतो देहलोलुपनरपिशाचानां धनलिप्सा तां निकटीकर्तुं यतते। पुनरपरतः पति-सन्ततिप्रभृतीनां करुणादृष्टिः तामेव निकषामयीकरोति।

लुम्बिनी नेत्रं निमीलितवती। नयनरागं कृशीकर्तुं हस्तद्वयं तस्य निकटीयमभूत्। सा अन्वभवत्। लुम्बिनी बुद्धमपेक्ष्य निजनिकटे एव-- - ---।

—o—

# नरकनिवासी

पतिं विलोक्य लता अगर्जत् ।

—अद्य गृहं परित्यज । एतावान् परिवारः । चत्वारः वृद्धाः । पञ्च बालाः । इतो गावः । ततो गोशाला । अन्यतः प्रतिवेशिनां कोलाहलः । गृहे वृद्धानामकारणं गर्जनम् । क एतत् सहिष्यते ? माम् अन्यत्र व्यवस्थापय । अन्यथा मम बाला मूर्खा भविष्यन्ति । गृहं तु नरकमिह ।

मनुः गृहस्य ज्येष्ठपुत्रः । ज्येष्ठस्य अधिकारेण स तत्क्षणमेव सर्वान् अभर्त्सयत् । गृहं त्यक्त्वा अन्यत्र गन्तुं च व्यज्ञापयत् ।

पितामही छलयन्तीव अवदत् ।

—अरे मनो ! पत्नी यथा त्वमपि तथा । सा त्वां वशीकृतवती वा ? त्वं तु गृहेऽस्मिन् परिवर्धितः । शिक्षा दिक्षा च तव अत्रैव । त्वं न मूर्खः संजातः । तव पुत्राः केन प्रकारेण मूर्खा भवेयुः ?

मनुरगर्जत् ।

—स्थापय ते इतिहासम। युस्माभिरेव गृहमिदं नरकीकृतम्। मम पत्नी किमत्र दासीरूपेण आगता ? गोसेवां वा वृद्धसेवां करिष्यति ?

पितामही अकुप्यत्।

—नहि, निजसेवां करिष्यति ?

वृद्धा मुखं विकृत्य उत्थाय पलायिता।

मनुः विक्षुब्धः। झटिति स पत्नीं निरदिशत्।

—सज्जीभव···। सद्य एव गृहान्निर्गमिष्यामः।

पितामही अपरद्वारे छलयन्तीव अवदत्।

—याहि···, किमस्माकं भविष्यति ? कियान्नो जीवनकालः ?

—याहि···, उपभोगं कुरु। राजनीतिं कुरु। मद्यं पिव। दुर्नीतिं कुरु। पैसा मिलिष्यति।

तदा प्रभृति मनुः पृथक्। न कश्चित् संपर्कः तस्य परिवारे। अन्यत्र वसतिः। पत्नी तत्र स्वतन्त्रा। स्वयं स स्वाधीनः। न कस्मै देयमस्ति। न वा किमपि हेयमस्ति। केवलमाहरणम्। राजनीतिमाध्यमेन संग्रहः।

पत्नी लता यदिच्छति तद् भवति । तस्या हि प्रेमविवाहः । ऋणं कृत्वा घृतं पिबेदिति आदर्शतले जीवनं सुन्दरम् । संप्रति तु ऋणमाध्यमेन सर्वमुपलभ्यते । गृहमस्ति । गन्त्री अस्ति । दूरदर्शनेन कालो गच्छति । का वा रात्रिः ? किं वा दिनम् ? सर्वदा क्रीडा । सदा च अभिनयः । लता शान्तिः लभते । मनसि आश्वस्ता भवति–अहो शान्तिः···अहो मुक्ति···

मनुः मद्यपानेन राजनीतिं द्रढयति । नेता भवितुं जनान् मेलयति । तेषां सविधे बहु भाषते––'इदमहं कृतवान । तदपि मया कृतम् । तव किमपि कर्म चेद् वद । सर्वमहं संपादयिष्यामि ।' मिथ्यावचने दिवसो निःसरति । धर्माधर्मयोः प्रश्नः निर्विशेष एव । मूल्यबोधस्य विचारः कथायामेव । न्यायान्याययोः कल्पनाजल्पना मात्रम् । केवलं नेतृत्वम् । केवलं मिथ्या । सर्वसंपादने प्रतिश्रुतिः । प्रतिवचनं हाँ···।

रात्रिः आगच्छति । सन्तर्पणकक्षे मधुमेला उद्घाट्यते । शैलवाला नृत्यं प्रदर्शयति । ततः सर्वं तन्मयम् । ततः तमसा । प्रशंसकानां मरालगमने मनुः राजहंसो भवति । कदा यदि प्रणाले संतरति । कदा पुनः मध्येमार्गं सन्तरति कदाचित् कस्य द्वारतले दारूभूत-

मुरारिः भवति चेत् क्वचित् रथ्यां पत्नीनाम गायं गायं वैष्णवो भवति। रात्रिः दीर्घायते।

लता बालान् निकटे उपवेशयन्ती दूरदर्शने चित्राणि पश्यति। तैलभर्जानि चर्वति। रात्रिभोजनस्य आवश्यकता नास्ति। बाला हि झटिति शेरते। पतिश्च बहिःर्भुक्त्वा आगच्छति। स्वयं सा यथेच्छमपराह्णे भुक्त्वा दूरदर्शने निमज्जति।

प्रतिसायं दुग्धविक्रेता गोपाल आगच्छति। दुग्धं ददाति। स कदा क्वचित् पृच्छति।

—मातः! गृहं परित्यज्य अत्र आगता। किं गृहे श्वशुरादीनाम् अन्येषां च कथा मनसि नायाति?

सा झटिति वदति।

—किमपि न वद। ते नरकनिवासिनः। तेषां कथा अत्र किमर्थम्?

गोपालः अर्पति।

गमनसमये चिन्तयति—एते कुत्र निवसन्ति?

—*—

# निर्जांशः

——पितः ! सुखेन अहं निवसामि । गृहेऽस्मिन् न शान्तिः
···न वा तृप्तिः ।

एवमाक्षिप्य जयी सपत्नीकः गृहान्निर्गतः । तेनसहकन्यापुत्रादयोऽपि प्रस्थिताः । निर्वाक् निधिः तटस्थः । तस्य लोलितचर्मणि तद्दिने अनपेक्षित रोमाञ्चः अद्भूततरंगात असृजत् । विपर्यस्तभावेन निधिः अपृच्छत् ।

——जयिमातः ! जयी किम् अस्मासु विरक्तः ?

जयिमातुः अन्तःकरणे सन्तप्तवात्सल्यस्य प्रकाशरेखा कियत्क्षणकृते कण्ठदेशे शोकरूपेण अवरुद्धा । तस्या मुखमण्डले आदरलिप्सा यथैका मौनप्रतीक्षा ।

मानभंगस्य कस्मिन्नेककालपनिकमिश्ररागे निधिः प्रथमप्रणयि इव वार्धक्यस्य अवदमितस्वरं मृदुरीत्या ललितो कुर्वन् समबोधयत् ।

——जयिमातः··· ··· !

वसनशेषांशम् आलुलयन्ती जयिमाता शनैः किंचिद् दुरमपसृता पादपातं गणयन्तीव ।

निधिः स्थिरीकृतवान्–जयिमातुः मौनता एव तदीयवचने सम्मतिः । तदनु प्रतिक्रियायां मुहूर्तानि शिथिलीभूतानि !

निधिः हतोत्साहितः ।

को वा कस्मै शान्ति प्रदास्यति ? तुत्रः जनकाय - - -? अथवा पिता पुत्राय- - -? एकस्मिन् दार्शनिक संशये निधिः आत्ममन्थनाय उपक्रान्तः–जयी अस्मासु विरक्तः । वृद्धपितृत्वस्य भारो हि उत्पादन विहीनशिल्पमिव नूनं दुर्वहः । तथापि पितृत्वं तु न शिल्पम् । किमेतद् जयी न बुध्यति ? पुनश्च पितृत्वमिदं पुत्रत्वस्य परिपूर्णता- - - ।

तथापि निकटे एका आत्मीया ललना- - -। तस्याः कोमलगान्धारमयस्वर समीपे पितृत्वस्य क्षयिष्णुसम्बोधनम उपहासमात्रम् । पुनश्च भोगसंभोग–पार्श्वे अवलयव्यक्तित्वस्य कियद् वा गुरुत्वम् ? अपरं च चरमे वयसि अपाङ्क्तेयरूपेण दण्डायमानो भूत्वा निजपारिश्रमिकनिमित्तं विपणीषु हस्तप्रसारणस्य कुत्र वा याथार्थ्यम् ।

सहसा निकटस्थमन्दिरे घण्टानादं कृत्वा कश्चिद् भक्तः निधिसम्मुखे प्रस्थितः। निधिः उपरि अपश्यत्। अकाशो नीलभास्वरः।

निधिः पुनश्चिन्तयितुमारब्धः

—जयी नावगच्छति। नावगच्छतु नाम- - - - - -। परं तस्य सुखे अहम् हेर्ष्यालुर्वा ? ममेयं भावना मम प्रच्छन्नभोगलिपसा वा ? स्वतःप्रवृत्तभावेन इदं वार्धक्यं मया स्वीकृतं वा ?

क्रमशो दूरस्पर्शी भवति निधेः दृष्टिपरिसरः अवसरेऽस्मिन् जयिमातुः लोलितं तत् प्राचीनसम्बोधनं तस्य भावनायां बाधासंचारमकरोत्।

शान्तभावेन निधिः अपश्यत्— सेयं जयिजननी- - - - नवीना - - - प्राचीना अपि। - - - शान्तिः - - - विश्रान्तिरपि। नयनपथे आदिमस्विकृतिः इदानीमपि प्राणमयी। तथापि जयिमाता ममतामयी- - -।

निधिः तस्या निकटीयोऽभवत्। सरलभावेन च अवदत्।

--जयिमातः ! जयी कुत्र वा यास्यति ? ?

—*—

# तलप्रवाहः

: उच्छिष्टमत्र पतति । उच्छिष्टपात्रमपि पतति । भुक्त्वा जनाः प्रयाताः । क इदं निक्षेप्स्यति ? पात्रं च कः परिष्करिष्यति ? प्रणालप्रवाहे आगत्य सर्वमपि उच्छिष्टमत्र स्तूपीभवति । उच्छिष्टात् उच्छिष्टमत्रैव जायते । अत इयं "वस्तिः" (वसतिः ?) । अत्र ललना नवनवीनाः । पुरुषा हस्तातिकाः (पदातिकाः ? ) । विचारधारा साम्यवादिनी । अतः सर्वेषां निष्कपाट (निष्कपट ?) द्वारम् । स्थल 'परदा' (परदारा ?) अत्र निजस्वमर्यादा ।

स्वप्नमिति न किमप्यत्र विद्यते । सर्वं सत्यम् । सर्वम् 'अथर्व'– शान्तिकर्मनिमित्तम आहुतिः । सत्यस्य परिसीमा ग्रीवातो जघनपर्यन्तम् –– जघन्यमेव कुष्ठायितःशेषसमाख्या संसारस्य आदिबिन्दुकृते ।

: उच्छिष्टस्तूपे प्रत्युषप्रवाहो मन्द्रः । वस्तिशय्यायां

क्रिष्णा मूर्च्छिता । दुःखा (दुःखासनः) परितः अपश्यत । तमसा अपसर्तुमुपक्रमते । निर्वाक् शिशुः इदानीमेव विलपितुमारपस्यते कोऽहम्- -कोऽहमिति- -। तस्य समाधानं (समाधिः) अधुनैव विधातव्यम् । अपिच इदमपि कर्तव्यं येन क्रिष्णा जललालरुधिर-कोषमपि द्रष्टुं न शक्नुयात् । सा नारी-एका असहिष्णु वैष्णवी । सर्वमिह उन्मुक्तम् । तथापि प्रत्येकवस्तुनो वयो वर्तते । तथापि अपह्नुतिः विषिष्यते ।

दुःखा खण्डवसनमन्विष्यन् आसीत् । हठात् शिशुः मुखमुदमुञ्चत् । दुःखा सत्वरं क्रीष्णादेहात् शाटीका-माकृष्यत । लालरक्तेषु क्रिष्णा स्नायिनी विद्यते ।

: कुक्कुटस्तुतिषु अरुणप्रकाशः अध्यासमात्रम् । दुःखा प्रणालस्य कूले कूले चकितरीत्या गच्छति । हस्ते तस्य सद्यः शिशुः वसनाच्छादितः - - - निशब्दः । मध्ये मध्ये दुःखा प्रणाले पादं निमज्जयति, प्रदेशोऽयं कियान् गभीर इति परिमातुम् । अपिच उत्कर्णो भवति, सञ्ज्ञां लब्ध्वा चित्कारमुखेन क्रिष्णा तमनुसरति वा इति आशङ्क्य । अन्ततः स तत्र उपनीतः यत्र प्रणालं पल्वलीभूतम् ।

पल्वलस्थ रंगे सूर्यप्रतिबिम्बं पुष्पिलं च पंकिलं च दृश्यते। दुःखा सत्वरं तत्र शिशुं न्यमज्जयत्। तदुपरि पङ्कमस्थापयत्। पुनः उत्थास्यतीति आशङ्क्य स कियत्कालं तत्र स्थितः। क्रमशः बुद्बुदा उत्थिताः। तेषां वर्णाढ्यविभां द्रष्टुं दुःखा तत्र नासीत्।

: उपगम्य दुःखा अपश्यत्——नग्ना क्रिष्णा तथैव लालरक्तेषु तीर्थीयस्नानं विदधाति। अहसत् दुःखा ——शरीरात् मलं यदि बहिर्गच्छेत्, मूत्रं यदि अपसरेत्, वीर्यं वा यदि स्खलेत् तर्हि कियान् आनन्दो नानुभूयते? तथैव देहात् यदि जीवनमपैति तर्हि नूनं महान् आनन्दः।

दुःखा प्रणाक्षतः अञ्जलिमितं जलमानीय क्रिष्णा मुखे अददात्। पङ्किलजलेन क्रिष्णामुखम् अधिकं विकृतम्।

: मत्तः दुःखासनः बहिरागमत्। विपरीतदिशि प्रवाहवेगेन सह निजपादगतिममेलयत्। ततः सा एव पूर्वरीतिः। सैव सीमिता भाषा। तदेव उच्छिष्टम्- - - -तदेव मर्यादा।

# अभ्यागतः

वृहन्मार्गेऽस्मिन् यदि आपणमुद्घाट्य उपवेक्ष्यामः तर्हि समस्तशङ्कायाः समाधानं भविष्यति। एतदर्थं प्रमाणपत्रस्य आवश्यकता नास्ति। वयःसीमाऽपि नापेक्ष्यते। वेशस्य परिच्छदस्य वा नियन्त्रणं न विद्यते। द्रव्यस्यापि मनोऽनुगुणता विचारो वा नास्ति। यत् किमपि अत्र विक्रेतुं शक्यते। इदानीं पैसा उड्डीयते। ग्राहका अपि यदृच्छया सर्वं क्रेतुं प्रभवन्ति। क्रयो विक्रयश्च काले काले इह जीवनम्⋯⋯।

—हाँ⋯भवान् किं क्रेष्यति ?

—त्वं वा किं विक्रीणासि ?

—मूर्खत्वमिह विक्रीयते।

—किं त्वम् उन्मादः ?

—कथम्⋯?

—भवान् न जानाति प्रमाणपत्रस्य मूल्यं गतमिति ?

—प्रमाणपत्रम् ?

—हाँ…, मया तु द्वादशवर्षाणि अधीत्य प्रमाणपत्रमर्जितम् । ततः कंचन अनुरुध्य पाठशालायां नियुक्तोऽभवम् । स जनस्तु परिवर्तितः । अपर आगत्य मां बहिष्कृतवान 'अहं मूर्खः- - - पाठयितुं न शक्नोमि' इति आक्षिप्य । तदनु अनुभूतम्, प्रमाणपत्रेण मूर्खत्वं क्रीतं मया । अतः तद् विक्रेतुमागतः । आपणं च उद्घाटितम् । सर्वत्र विज्ञापितम् । भवान् न जानाति ? अहो, आश्चर्यम् । किं भवान् देशेऽस्मिन् अभ्यागतः- - - ? अतिथिः…?

—अरे, कथमहम् अतिथिः ? त्वं तु चतुष्पथतः चतुष्पथान्तरम् अन्वेषि । अहं पुनः न तथा । इयद्वृत्तपत्राणि प्रत्यहं मया पठ्यन्ते । तव विज्ञापनं कुत्राऽपि न मया दृष्टम् ।

—अहं तु सदा वृत्तपत्रे पठामि यद् भवान् निरन्तरं विदेशयात्रां करोति । अद्य यदि अस्मिन् देशे अभ्यागतः । श्वः अपरदेशे । भवतो विज्ञापनं मया पठ्यते । मम विज्ञापनं कथं भवता न पठ्यते ?

—अरे ! यो विज्ञापनं प्रकाशयति सोऽपि उपरिस्थानाम् अभ्यागतो भवति । तव वार्तां शृणोति कः ?

—श्रवणे का आवश्यकता ? अभ्यागतानां स्वागताय मया तु आपणमुद्घाटितम् । सकृदागमने अत्र सर्वे अभ्यस्ता भविष्यन्ति

—नूनं···नूनम्... । कथं न ?

—आगच्छतु ··· अन्तः प्रविशतु ।

—अहो; महदिदं प्रमोदस्थानम् ।

—अधरं मधुरीकरोतु - · - अभ्यागच्छतु - - - ।

—अहं केवलः कथम् ? बालिका तो वृद्धपर्यन्तं सर्वे इतः परं ते अभ्यागताः- - - - - - ।

—*—

# रजोमहोत्सवः

निदाघो व्याघ्र इव । दिनपूर्णं तापः । स्वेदक्लेशस्तु दिवासारांशः । पूर्णफला इदानीम् आम्रमञ्जरी । विल्वफलं प्रपाणकीयम । संध्या स्नेह-शोषिणी । यामिनी नग्नकामिनी । मल्ली तल्परसिका । प्रतिपवनं रजः प्रवाहः । महोत्सव आगतप्रायः ।

सांध्यस्नानं विधाय नलिनी पल्वलतः उत्तिष्ठते । क्षीणतमसि सहसा अदृश्यत शकटः । नलिनी पुलकिता । महोत्सवमभिलक्ष्य अद्य प्रथमवारं गृहमागच्छति रमा । सा बाल्यसखी । कैशोरे सा मन्त्रणाप्रिया । यौवनस्य प्रथमसोपाने सा परगृहवासिनी । तदनु साक्षात्कारो नास्ति । अतः नलिनी उत्सुका– सा मनःपूर्णं ताम् आलिङ्गिष्यति ।

प्रतिनिमेषं पृथिवी नवीना । अद्य सा रजोराजेश्वरी । अतः अभिरूपा । अभिजातकल्पनायां गौरवमयी । वरेण्या सा महोत्सवप्रिया । अतो लोकानुरागाय निजदर्शिनी ।

संप्रति रमायाः पित्रालये स्त्रीणां कोलाहलः। सकलमुखे परिपृच्छा–कथं वर्तसे ? पतिः कीदृशः ? कथं च श्वश्रूव्यवहारः ? अन्ये सर्वे किंभूताः ? सर्वमेतद् उपवर्ण्य रजनी उपसंहरति– अन्यद् अन्यदा।

तद्दिने नलिनी प्रत्यागता। रमा दर्शनं नेष्टवती। सा इदानीं क्लान्ता। आलापस्य नायमवसर इति तस्या माता सर्वान् निषिद्धवती। नलिनी विषण्णा। मनसि तस्या नाना कल्पनाः। इयं वकुलछाया। अत्र बहुवारं तामालिङ्ग्य नलिनी कालं यापितवती। अत्र केलिः - - - अत्र विलापः - - -अत्र पुनः सकलमनः कथा - - - इहैव सर्वम् अङ्कुरितम्। परमिदानीं स्थानमिदं विधुरम्। पुनरत्रैव स्मृतिं नवीकर्तुं सा ताम् आकारयिष्यत् - - -। किंतु - - - !!

अथ रजोमहोत्सवः। दोलायते दोलिः। वृक्षः वृक्षं स्पृशति। शाखा शाखामालिङ्गति। प्रतिपर्णं रमते। मनः। बालो विलासी। किशोरः कौशली। किशोरी रासेश्वरी। अन्ये तु - - -।

नलिनी सुवेशा। नववसने सा यथा प्रगल्भा कुमुदिनी। सखीस्नेहे नितरां चञ्चला। सानन्दं सा रमामुपसृतवती। पूर्वभावं मानसगामीय अवदत्।

—रमे ! किं मां विस्मृतवती ?

रमा उपेक्षितवती ।

तथापि नलिनी आकारयत् ।

—रमे- - - ! रमे - - - ! एहि नु - - -, अद्य रज्जो महः ।

रमामाता सहसा निर्गम्य अवदत्

—नहि, सा नाऽधुना यातुं शक्नोषि ।

—किमर्थम् ?

—युष्माभिः सह तस्याः कः संपर्कः ? सा इदानीम् अभिजातस्य वधूः । परस्य गृहिणी । तस्या मर्यादा भिन्ना ।

—मर्यादा ?

अभिजातः... मर्यादा... इति अनुरणयन्ती नलिनी प्रत्यागता ।

वकुलच्छायायां दोलिः दोलायते ।

रमा व्याकुलतया तत्र आगम्य विलम्बितवती । नेत्रम् अरुणायितम् ।

उद्यापित उत्सवः ।

अपरदिने ग्रामात् शकटो निर्गतः । रजनी श्वश्रूगृहं

प्रतिष्ठते । अपराह्णं वेला । वकुलमूले प्रतीक्षते रजनी—'अवश्यमद्य रमा आलपिष्यति' ।

शकटः अतिक्रान्तः । नलिनीकपोले पुनः लोतकं तरलायितम् । अग्रे केवलं रजोमहः··· केवलो धूलिः- - - धूसरा दिक् । ततः शकटः अन्तर्हितः । वकुलच्छाया दीर्घतरा । एकपार्श्वे तथापि दण्डायमाना नलिनी । धूलिवायुः अपसृतः । किन्तु निदाघमार्गे लघुधूलिघूर्णिः आवर्तप्रणयिनी आसीत् ।

—o—

## उपवीथिः

स्वस्थमनसः परिणामो न कदापि अनुतापः । न वा अनुशोचना प्रफुल्लहृदयस्य संवेगवान् उच्छ्वासः । समुद्रः अदृश्यः । मार्गः अनतिक्रम्यः । संघर्षः अनिवार्यः । - - - सा एका सृष्टिः- - - एका उन्मादिनी नदी- - - न जानाति किमर्थं प्रवहति ।

( २ )

: स्रष्टा अभिशप्तः- - - - - -

अध्यापिका प्रज्ञा अध्ययनरता । वातायने दृश्यते उपवीथिः तत्र यन्त्रणाग्रस्तो बलीवर्दः निश्चेष्टः नयने तस्य वेदनासिक्तमश्रु । देहे अस्थि समुज्ज्वलम् । वायसानां स्वरे महाकालः अवतरति । उपवीथिः निःशब्दा ।

सहसा प्रज्ञाया दृष्टिः तत्र समाकृष्टा । सम्यक् सा निरीक्षितवती—व्याधिभुक्तं शरीरमालुण्ठितम् । प्रज्ञा दुःखचकिता । अभासत सम्मुखे बलीवर्दस्य प्रकृस्थितिः —सोऽपि युवा आसीत् - - - कर्मठ आसीत्- - - प्रभुभक्तोऽपि आसीत् । परमात्मानि महान अभावः- - । तदर्थं तस्य अनुतापो नासीत्, न वा चिन्ता आसीत् । स समवयस्कया सह भ्रमन् आसीत्, खादन् आसीत्, शयमानोऽपि आसीत् । मिलनस्थानमद्यापि रिक्तं वर्त्तते । वृद्धा समवयस्काऽपि तथैव वर्त्तते । युवभावस्तु अभावे निर्लिप्तः ।

काकः वृक्षात् अवातरत । निश्चलशरीरोपरि उपविश्य आरभत तस्य विच्छिन्नविरुतिम् । व्यथिताऽभूत् प्रज्ञा—दिनमासीत् । साऽपि विद्यार्थिनी आसीत् ।

युवाध्यापकः तदा नायिकानायकयोः प्रणयं विचित्रयन् तस्या एव मुखं पिवतिस्म । परं कतिपय हताश स्पन्दनेषु प्रज्ञा भ्रमिमथिता आसीत्––तस्याः शरीरे यत् किमपि लोभनीयं- - -यत् किमपि आकर्षणीयं- - -यत् किमपि मनोरमणीयं तत् सर्वं अद्यापि नेपथ्यकोलाहलमिव ।

काकः बलीवर्दस्य शेषमुहूर्तं प्रतीक्षमाण आसीत् । शनैःस उत्प्लुत्य नेत्रसमीपं गतवान् । भिन्न हृदया प्रज्ञा उपवीथिमवलोकयति––बलीवर्दस्य प्रभुः महान् उदारः । चरमे वयसि सन्न्यासजीवनमङ्गीकर्तुम् उन्मोचितवान् । निश्चेष्टनयनं तस्य अनुसंधत्ते चरम प्रशान्तिम् - - - महाकालस्य छायातले चिरमुक्तिम । देहोपरि काकस्य पादचिह्नं सम्यक् लक्ष्यते । अस्मिन् उपविथिदेहे युवाध्यापकस्य पदाङ्कः अद्यापि संकेतं स्मारयति । प्रज्ञा आसीत् तत्कृते भ्रमशरव्यम् । किंतु सा सत्यं वक्तुं न प्राभवत् । युवाध्यापकः वक्ररीत्या अभिलाषं प्रकटितवान् । प्रज्ञानिकटे तु अश्रु विना नान्यत् किमपि आसीत् ।

( ३ )

विद्यार्थिनी प्रज्ञा अद्य अध्यापिका प्रज्ञा । उपवीथिस्तु सैव उपवीथिः । पलितकेशेषु तस्या

अभिलाषो निर्लिप्तः। अद्य संघर्षः कृशतरः। आवरणतले तु स एव अभावः। सैव उपवीथिनेपथ्यस्मृतिः। सा तथापि जीवति। नदीव प्रवाहमुखरा।

कपोलतः स्रोतकमपसार्य प्रज्ञा अपश्यत्—बलीवर्दस्य नासिका फेनिला। वायसः तस्य दक्षिण-नयनं भोक्तुमुपक्रमते।

—*—

# आरम्भः

: कस्य कथां श्रावयामि ? राज्ञः कथाम् ? अथवा राज्ञीकथाम् ? निजकथां वा ? यदि राजकथां वदेयम्- - - तर्हि भवान् माम् आक्षेपस्यति—अहं विश्वास घातकः कृतघ्नश्च। यदि निजकथां कथयेयम्···तर्हि भवान् मामुपहसेत्।

अहं तु मनुष्यः। वाक्स्वाधीनता मम भगवत् संविधाने एका निर्मलधारा। अवश्यं किंचित्

उदाहरिष्यामि । उदाहरणं हि सिद्धान्तस्य परिषोषकम् । एतदर्थं सर्वसमारम्भः । किन्तु कस्य चरितं वा वर्णयामि ? सत्यम्, भवान् नूनं श्रोष्यति यदि मम सन्ततिचरितं श्रावयामि ।

: ते नूनमेकदा मम इतिहासम् अनुशीलयिष्यन्ति । मम व्यवहारगणितम् अङ्कीकरिष्यन्ति । अङ्कान् च पुनः पुनः कषिष्यन्ति । मम परिश्रममाविष्करिष्यन्ति । ततो हसिष्यन्ति···खेलिष्यन्ति मामुदाहृत्य एव । ततो विचारयिष्यन्ति - - - - - -। विचारे सर्वे तु स्वतन्त्राः ।

तेषां निकटे मम कथा तु नोक्ता । ते अवश्यम् अन्यतो ज्ञास्यन्ति । पितृशब्दस्य अर्थं कदर्थं च परिशीलयिष्यन्ति । तत आकलयिष्यन्ति, पितृशब्दे आनन्दस्य परिमाणं कियत् ? पितृसम्बोधने च दुःखस्य आत्मीयता कियती ? सम्बोधनस्य कदर्थप्रच्छदे भ्रष्टता कियतपरिमता ?

मम राज्यं, मन्निर्मितं प्रसादं च विलोक्य ते हृष्टा भवेयुः । ततो यशोगानं विस्मृत्य कृतघ्नस्य गतानुगतिकमार्गे ते विहरिष्यन्ति ।

: त्रुटिनिमित्तं नाहमनुतप्तः। त्रुटिस्वीकाराय च न प्रस्तुतः। त्रुटप्रायश्चित्तनिमित्तं च न यत्नवान्। त्रुटिं अन्यः अनुकरोति इति जानन् अपि तस्य निषेधाय इच्छा मे नास्ति। स त्रुट्यति। स त्रुट्यतु यथेच्छम्। ततसर्वमपह्नोतुं त्रुटिसहस्रमपि आत्मसात्कर्तुमह सन्नद्धः।

: राजमातुः उपनेत्रतले सर्वं किंवदन्ती भविष्यति। तस्याः शिशुकथासु लघूदाहरणेषु च राजा पुण्यवान नायकः--- "अस्ति कस्मिश्चिदधिष्ठाने अमुकनाम पुण्यवान् राजा"। राज्ञोक्रोडमेव प्रायश्चित्ताय एकमात्रं तीर्थम। भवान तीर्थगामी कश्चित् पुराण-श्रोता। अहं च क्रमरक्षी "हुँकार"-भर्ता।

इदानीं तु श्रोतुं न कस्य इच्छा। सर्वे वक्तारः। अतः सभा आयोज्यते। समितिः निर्मीयते। शृण्वन्तु--शृण्वन्तु--- इति अनुरुध्यते। किन्तु श्रोतृगोष्ठीतः श्रावकगोष्ठी बृहत्तरा भवति। यजमाना न दृश्यन्ते। याजकास्तु बहवः।

: सत्यम्---, विस्मृतं मया श्रावयितुम्। प्रतिश्रुतं नु प्रथमतः? मम सन्ततिचरितं श्रावयामीति

उक्तं नु ? इदानीं यावत् तच्चरितं तु न प्रारब्धम् । यदा प्रारप्स्यते तदा नूनं भवान् उदाहर्तुं प्रभवेत् । तदानीमेव मां च श्रीगणेश इति वक्तुमारप्स्यते ।

—×—

## स्त्रीप्रत्ययः

शम्भुनाथः गृहं प्रत्यागतः ।

प्रतिदिनमिव अद्य स भृशमकुप्यत्

—कथं सदा निष्कारणं ताडयसि ? किं ते ममता नास्ति ? पुत्र इति ते विचारो नास्ति ? यदा पुत्रं न पश्यसि तदा ते व्यस्ततायाः सीमा नास्ति ? यदा च पश्यसि तदा भर्त्सयसि ? अदर्शने विलापः दर्शने कोपः - - - - - - केयं ते नीतिः ।

मङ्गला गर्जति ।

—त्वन्निमित्तं सर्वमेतद् भवति । 'अनुजो मे मनुष्यो भविष्यति । मम नाम प्रथयिष्यति । जनप्रवचने अहं

धन्यो भविष्यामि'--- एवं विजल्प्य अनुजमानीय गृहेऽस्मिन् स्थापितवान् - - - लालितवान्- - - । अन्ततः स किं कृतवान् ? मम अलंकारं चोरितवान् । द्रव्याणि नाशितवान । अवशिष्टानि यानि दुर्मूल्यवस्तूनि आसन् तानि सर्वाणि गृहीत्वा रात्रौ अन्तर्हितः । कुत्र गत, इदानीमपि तस्य संकेतो नास्ति । अहो एतावान् हृतलक्ष्मीकः - - - !! यदारभ्य गृहमागतः तदा प्रभृत्ति क्षयः- - - हानिः- - - पीडा- - - ।

शम्भुनाथः धीरभावेन अवदत् ।

—अयि ! द्रव्याणि नष्टानि । पुनः किं नोपार्जयिष्यन्ते ?

चिन्ताकुलतायां को वा लाभः ?

—तवाऽत्र किं भवति ? मम तु सर्वं नष्टम् ।

—तव द्रव्याणि किं न मम ?

—तव तु अनुजप्रेम वर्धते ।

—त्वं तु तं विहाय मां भर्त्सयितुमारब्धा । पुत्रताडनं परिहाय मामपि ताड़यिष्यसि

—गृहविषये त्वं वा किं वुध्यसि ? प्रातः कार्यालयं गत्वा सायं प्रत्यावर्तसे । गृहे हानिर्वा लाभो वा त्वदर्थं सर्वम्

अकिंचित्करम् । मासान्ते कियन्ति रूप्यकाणि आनीय मत्करे समर्पयसि वदसि च—'मासपर्य्यन्तं गृहं चालय'। किन्तु तानि तु ऋणपरिशोधे निर्गच्छन्ति। पुनश्च अनुज-प्रेम···बन्धुप्रेम ··· तथा च नाना··· । कथमेतत् सर्वं चालयिष्यते ?

—पुत्रताड़ने किं सर्वस्य समाधानं भवेत् ?

—यथा ते अनुजो मूर्खः तथाऽयं पुत्रस्ते मूर्खः । स यथा करोति स्म तथाऽयं करोति । स यथा हसति स्म तथाऽयं हसति । सर्वमनुकरोति । पुत्रः - - - ··· ? धिक् ते पुत्रम् । अस्य मुखदर्शनेन मनो मे ज्वलति । अस्य वचनश्रवणमात्रं तस्य सर्वोऽपि विभावः नेत्रपथ-मागच्छति। न जाने, कस्मिन् मुहूर्ते जन्म एषाम्। धिक्- - - धिक्···।

—अयि ! सर्वमेतत्ते मानसिकविक्रियामात्रम् । स तु बहुदिनेभ्यो गृहान्निर्गतः। पुत्रोऽयं बालः। कथं तत्सर्व-मनुकृत्य अयं प्रवर्त्तते- - - ?

—त्वयि का व्यथा ? सन्तानोत्पादने तव तु कष्टं न भवति। सर्वमहं सहे। यदाऽहम् अन्तःसत्त्वा आसम्- - तदानीमपि तव दर्शनं न मिलति स्म। 'मम अनुज एव

सर्वं करिष्यतीति' उक्त्वा कार्यालय-कर्मच्छलेन बहिर्गतः। तदानीं स एव मूर्खः मन्निकटे आसीत्। तस्यदुर्गुणानां प्रभावः मम सन्तानोपरि पतितः। तदा प्रभृत्येव दुष्टोऽयं महामूर्खः संजातः।

शम्भुनाथः किं वा वदिष्यति? बहुविधवंचनेन मङ्गलां बोधयितुं यतते। सर्वं निष्फलं भवति। मङ्गलाया विश्वासे रोषं संचारन्ति—अपहृतवसनानि - - - भूषणानि ··· पुत्रस्य विकलकर्माणि- - -। सा गृहे साक्षात् सर्पिणी। शम्भुनाथः क्रमशः दुष्टहृदयः। तस्य सकलचिन्तायां सैव चण्डी भीतिं वितनुते तदर्थं शम्भुनाथस्य कार्यप्रसरे नीतिदुर्नीत्योः पार्थक्यं नास्ति। स बलिमन्विष्यति। देवीप्रीतिनिमित्तं च रुधिरं संगृह्णाति। तस्या एव मूढप्रत्यये अन्ततः स्वयं नैवेद्यायते।

—o—

# एकाकी

अहम् असंयतभावेन मम मातरमभर्त्सयम्। साऽपि तथैव मयि गालीमवर्षयत्। उभयोर्महान् कलहः संजातः। तस्या गाली नितरां तीव्रा आसीत् यामहं सोढुं नाशकम्। अहं शिशुरिव उच्चैरक्रन्दम्।

श्वः मम पुत्रजन्मोत्सवः पालयिष्यते इति मे नगरवसतिं मातरं नेतुमहम् आगतवान्। परं तस्या एकैव कथा – – एकैव मतिः – – –'ग्रामे एव अस्माकं परंपरा। ग्रामे च अस्माकं पूर्वजाः पितृपुरुषा न्यवसन्। अतः अत्र उत्सवः परिपालनीयः। अत्र मर्यादा वर्धिष्यते।'

तामहमबोधयम्।

ममात्र वैमत्यं नास्ति। अधुना तु ग्रीष्मसमयः। विंशतिदिनानां शिशुः। तं धृत्वा यानवाहने आगमनं न समुचितं भवेत्। अपरं च वधूस्ते नाधुना स्वस्थ-शरीरा। चिकित्सकः तां याने आगन्तुं न्यषेधत्। तव गमनं तत्र वरं भविष्यति।'

तथापि तस्या एकैव कथा ।

'यद् भवतु नाम ते सर्वे अत्र आगच्छन्तु । मम ग्रामे मम सम्मानम् अधिकम् । तत्र को वा मम उत्सवं जानीयात् ? अत्र प्रतिवेशिनः सन्ति । बान्धवा अपि आगमिष्यन्ति । सर्वेषां साहाय्यं मिलिष्यति ।

अहम् अकुप्यम् ।

पश्य, मातः ! यदा मे पिता स्वर्गतः तदा एते ग्रामीणाः एते स्वजातीयाः, एते प्रतिवेशिनः अस्मान् कियन्न अपीड़यन् ? अन्ततः, कतिवारं अस्माकं गृहतः चोरयित्वा अस्मान्न दरद्रीकृतवन्तः । इदानीमपि बहुधा असौविध्यं सृजन्ति - - -अस्मान् च उत्पीडयन्ति । कदा कदाचिदपि सर्वे मिलित्वा अस्मान् ताड़यितुं सन्नद्धा भवन्ति । अत्र दुर्बलस्य वासो नास्ति । धनिकानामत्र दौरात्म्यम् ।

सा केवलमाक्षिपत् ।

पत्नी तव मस्तिष्कं विकृतवती । सा यद् वदति त्वं तत् करोषि । अस्मान् वा किमर्थं पृच्छसि ?

अहमन्वभवम् ।

काश्चन ग्रामस्त्रियः मातरं मे व्यपथयन् । केचन ग्रामखलाः अद्यापि मम गृहं नाशयितुं यतन्ते

सर्वा चेष्टा मे व्यर्था ।

अहं निरुपायः संजातः । मातृपार्श्वत उत्थाय बहिरागतः माता च मुखं विकृत्य उत्थिता । अहं नगरोन्मुखोऽभवम् मार्गे न कश्चिन मे पश्चात् आसीत । विषादे विलीन-मासीन् मे मनः । अहं मनस्यन् आसम्——पठनाय विदेशगमनकाले अस्मिन् मार्गे मम माता मामनुसृत्य अनेकदूरपर्यन्तम् आगच्छति स्म । तामहं प्रस्थानाय अनुनयामि स्म । मदर्थं नानारीत्या मङ्गलं कामयमाना सा दुःखातिशयेन प्रत्यावर्तते स्म । इदानीं तु तस्मिन्नेव मार्गे अहमेकाकी । माता मामभिशप्य गृहे विलपति । आवयोः संपर्क आविलो भवति । स्तन्यं प्रदाय सा मां वर्धयति स्म इति माता मे संप्रति विस्मरति । अहं तस्याः पुत्रोऽपि पत्नीपुत्रादीन् प्रति मे किंचित् कर्तव्य-मस्तीति तामहमपि बोधयितुं न शक्नोमि ।

अद्यापि तन्निकटे स एव क्षयिष्णु-ग्रामः पुण्य-स्थानम् । स एव दूषितसमाजः महीयान् । स एव चौरप्रतिवेशी महान् । स च ग्रामखलः बुद्धिदाता गणेशः । सा च ग्रामवृद्धा पुष्करिणी - मात्र - सहयायिनी उत्सवसखी ।

अहं नगरोन्मुखः पशुः। मन्निकटे संपर्कस्य मूल्यं नास्ति। केवलमर्जनम्...भोजनम् - - -। धनं मे जीवनम्। मदर्थं सर्वं द्रव्यं नग्नमेव।

अहं मार्गेऽस्मिन् एकाकी- - -

माता अभिशपति। गृहं विखण्डितं भवति। पत्नी आत्माघाताय यतते। शिशुकन्या जरती दृश्यते। शिशु पुत्रः यमेन सह संघर्षं करोति। भ्रातरः गृहे प्राकारं निर्मापयन्ति।

अहमेकाकी - - - - - - -।

—×—

## समासः

सोपा बहिरपश्यत्।

द्वारम् उन्मुक्तम्। सरलमार्गे पवनो गृहं प्रविशति- - - धूमकुण्डलीम् आवर्तयति - - - रमयति···उपरीकरोति। द्वारस्य उत्तरिभागे आकाशः सुनीलः। निम्नभागे केचन गतानुगतिका ... - - - दिनविक्रेतारः। क्षणाय ते आविर्भूय तिरोभवन्ति। स्वरस्तेषां मिश्रध्वनिषु

समस्यते । लोपाया गुञ्जने बुद्बुदचञ्चला भवति चुल्लीनिहिता स्थाली ।

स्थाली पचति ।

लोपाया नयने नृत्यमारभते मासान्तमुद्रा । मुद्रेयं पुत्रस्य - - -कन्यायाः- - -निजपतेश्च । एतदर्थं सा बाल्यात् पठितवती । कर्मक्षेत्रे च इदानीमुद्योगिनी । सेयं वृत्तिः मध्यवित्तस्य संकेतलिपिः । अद्यत्वे तु प्रशिक्षितनारीणां मार्गद्वयम्—लिपिकृता, शिक्षकता वा । एतदर्थं स्पर्धाऽपि पुरुषप्रिया । केचन दयावन्तः नारीणां कृते क्षेत्रद्वयेऽस्मिन् सामान्यव्यवस्थां विहितवन्तः । परं नीतेरन्तराले संप्रति नारी न दशभुजा । पुरुषा हि सहस्रभुजाः । अतः मध्यवित्तसीमारेखातले नारी तथापि आरम्भ कालस्य पचनसामग्री ।

तथा च लोपा अभिनेत्री ।

चिन्तायां शून्यसंहिता । अन्तकरणे दीनहीनता । भावनायां निलयः अभावस्वभावः । किंतु गृहमिदं तस्या वेशभूमिः । प्रकोष्ठसमूहः नेपथ्यगृहम् । तेषु चयनीयं शयनीयमेव । तत्र दोलायते प्राचीनदर्पणम् । प्रतिदिनं लोपा तत्र निजमुखं पश्यति । अधरं रञ्जयति । गलेचिबुके

नाटकीयतिलचिह्नं स्थानान्तरीकरोति । कपोले करं चालयति । समासेन आत्मानं सज्जीकरोति- - -किंचित् प्राप्तये - - - किंचित् पूर्तये - - -किंचिदपह्नुतये- - - -। दिवा अवनम्यते ।

कार्यालयं परित्यज्य मध्यवित्तस्य आभिजात्ये प्रत्यायाति लोपा । लिपिकतर्कणाया स्थगयति ग्राहकसमस्याम् । संस्करणं शिथिलयति सा सज्जाविमोचने । दर्पणसम्मुखे पुनर्देहं निरीक्षते । पार्याकुलकेश-कतिपयं यथास्थानं निवेशयति । मुखं प्रक्षालयति । पुनरपि लेपयति सुलभमुखरागम् । पत्युः प्रत्यागमनं प्रतीक्षते । वातायने प्रपश्यति । शिशुं च स्तन्यं पाययति । मार्गे प्रत्यावर्तन्ते दिनविक्रेतारः । कण्ठे तेषां स्वरो न वर्तते । न वा पार्श्वे विक्रयवस्तु विद्यते । तेऽधुना कायाकारपरिणता भूतविशेषाः ।

लोपामनसि पदराशिः ।

सा पादं मेलयति । सभ्यतायाः समस्तरं तु दूरायते । सा पादं प्रसारयति । अतीतं न तां त्यजति । मध्यपथः देहलीयति । अग्रे वामचरणं । पश्चात् दक्षिणपादे संलग्नो भूमिः । जानकीचरिते तस्या लक्ष्मणस्य

मध्यवित्तीयरेखात्रयं मायां रचयति। सम्मुखे दण्डायमानो भवति जीविकानिमित्तं कृशीकृतो देहः- - -सुखनिमित्तं कर्मणो दाहः- - -विलासनिमित्तं किं-कर्तव्यमोहः - - - ऐश्वर्यनिमित्तम् अधिकसंग्रहः - - -। किन्तु धावनं कुण्ठी-करोति रोगप्ररोहः।

स्तन्यदानं समासयति लोपा।

निजविग्रहं सा आविष्करोति।

विग्रहे सा स्वयं समस्यमानपदार्थः। यत्र कुत्रापि वृत्त्यर्थम् अवबोधयितुं समर्था। यत्र कुत्रापि आत्मानं संयोजयितुं शक्नोति। स्वभावः तन्निकटे एकार्थीभावः। स्वरूपता नाम समस्यमानता।

—*—

# चन्द्रशालां

: स्मृतिरपि सम्भाव्यं सृजति - - - - - -

अतो विदुरो दुःखी । न राज्ञी, न वा राजा अस्ति । वर्त्तते - - - प्रासादः···प्रासादस्य मुखशाला···चित्रमयी भित्तिः । पुनश्च विलासस्य स्वाक्षरं वहन्ति कियन्ति आसनानि--राजासनम् - - - सचिवासनम्- - - आगन्तुकानाम् आसनम्- - -। सर्वोपरि सुन्दरी अत्र चन्द्रशाला । अत्रैव अद्यावधि प्रतिहारी विदुरः ।

: चन्द्रशाला ऐतिहासिकी······

तदानीं राजा आसीत् । राज्ञी आसीत् । विदुरस्य पिता च प्रतिहारी आसीत् । कदा कदाचित् पिता विदुरं गृहीत्वा इमामेव चन्द्रशालां दर्शयति स्म । तदानीं विदुरः चद्रशालां दृष्ट्वा मुग्ध आसीत् । राज्ञः राज्ञ्याश्च दर्शनं लब्ध्वा कृतकृत्य आसीत् । राज्ञी च किंचित् पारितोषिकद्वारा तम् आह्लादयति स्म । दर्शनं समाप्य यदा विदुरः पित्रा सह प्रत्यागच्छन् आसीत् तदा पिता शनैः जल्पति स्म—चद्रशाला इयं न केवलं विलासशाला

अपितु देशस्य भाग्यमत्र निर्धारितं भवति। सर्वाऽपि नीतिः इत एव प्रभवति। अत्याचारस्य मूलकला इयं चन्द्रशाला।

: विदुरः चकितः ......

कालो विप्लवशीर्णः। राजा गतः। तदीयशासनमपि गतम्। किंतु कलहमूलोऽभूत् अयं प्रासादः। सर्वकारीय विवादे प्रासादः पिशाचनिवासः संजातः। केचन नीतिवादिनः अवदन्—'विश्वविद्यालयस्य स्थापनं भवतु'। केचन वैमत्यं प्रकाश्य उक्तवन्तः—'अत्र अट्टशूलस्य निर्माणं भवतु। विदेशपर्यटकानामत्र निवासो भवतु। अनेन देशस्य लाभो भवेत्। लाभदृष्ट्या विश्वविद्यालयस्य कियन् मानम्? एवं बहुवितर्कानन्तरं प्रासादेऽस्मिन् विश्वविद्यालयः संस्थापितः। प्राक्तनकर्मचारिणः यथास्थानमत्र नियुक्ताः। अधुनेयं चन्द्रशाला अधिषत्सदनम्। अत्र प्रतिहारी विदुरः।

: स प्रगतवयस्कः ... ...।

न शासनमस्ति। न वा कश्चन नियमो वर्तते। सर्वत्र विशृङ्खला। सर्वे प्रशासकाः। सर्वे प्रभवः। इदानीं ममधिषदि नैके निर्वाचित-सदस्याः। न तेषां शिक्षा, न

वा नीतिनिर्धारणविषये काचिन्मतिः वर्तते । तथापि ते विश्वविद्यालयस्य । कर्णधाराः कदाचित् तेषामध्यापक मारणनीतिः प्रसरति चेत् क्वचित् छात्रमारणनीतिः प्रवर्तिता भवति । कदाचिदपि कर्मचारिणां मूलच्छेद-नीतिः निर्धारिता भवति ।

: तथापि नीतिः विज्ञानमूला- - - - -

विश्वविद्यालयद्वारा वैज्ञानिका वा असुरा वा निर्मीयन्ते इति विदुरो ज्ञातुं न प्रभवति । अधिकारिणोऽत्र राक्षसा वा साक्षरा वा इत्यपि अवगन्तुं न शक्नोति । तथापि अत्र स चन्द्रं पश्यति । राज्ञीं स्मरति । राज्ञः अत्याचारं विमृशति । अद्यतनसमाजप्रसंगे तत्सर्वं च समन्वेति । सिद्धान्ते तस्य अधिकारिणाम् अविमर्श एव अत्याचारायते ।

अविमर्श एव परमाणुरणं सृजति । चन्द्रशाला अत्र साक्षिणी । एतदर्थं चन्द्रो मृतः - - -दग्धः- - - जलशून्यः । चन्द्रेऽपि वैज्ञानिका आसन् । तेऽपि कुशलिनः निपुणाश्च आसन् । परमुग्राणां का गतिः ? अविमर्शवशात् तत्रापि अणुसमरः संघटितः । तदनु समुद्रो वर्तते । ...जलं नास्ति । पर्वताः सन्ति । - - =

वृक्षा न सन्ति । भूमिरस्ति । ···जीवसत्ता नास्ति । चन्द्रो विकृतः - - - मृतः । तथैव, अन्ये केचन ग्रहाः - - । : विदुरो मग्नः -...

राजा गतः । चन्द्रशाला पिशाचनिवासोऽभवत् । विश्वविद्यालयश्च उग्रकवलितः । ···इयं विकृता । साक्षराः राक्षसाः संजाताः । समरः अवश्यम्भावी । ततः···? ततः चन्द्रशाला निष्प्राणा । चन्द्रो धूमिलः । आकाशो गर्भसारः । पृथिवी शुष्का । वात उत्तप्तः । आलोकः पक्वप्रभः । ——अन्यत् चिन्तयितुं न शक्नोति विदुरः

इदानीं स एकः जरत्काकः···नपुंसकः··· साक्षात् प्राचीनकंचुकी ।

—x—

# झरी

प्रवाहेऽस्मिन् किं प्रवहति - - -? आत्मानम-पृच्छत् अलका । आलोकसंपर्के अत्र दृश्यते केवलम् अणूनां परिमण्डलम् । प्रत्येकं विच्छिन्नम् अविशिष्टमपि । सर्वे च अद्वैत गन्धे गन्धिष्णवः । पुनश्च सर्वेषु विभागस्य स्वरः—'अहम्'- - - । अहमिति अक्षरद्वयं संकलय्य 'हुँ'–रूपेण परिणमयन्ती अलका दीर्घश्वासमगृह्णात् । आत्मनि च गम्भीरा संजाता ।

वयः उत्तीर्णप्रायम् ।

अखण्डनारीत्वस्य स्वप्ने बहुदिनेभ्यो निमग्ना अलका । अद्यावधि अनुभवे न काऽपि फलाफलयोः सूची प्रकटिता । झरीयं किमर्थं प्रवहति ? प्रश्नेऽस्मिन् आत्मानं संकोचयति अलका । परमनुभवति यदेकदा 'कुम्भीपाक' इति विविच्य सा जन्मतः निर्वृत्तिं प्रार्थयति स्म तत्रैव अयुतशिशूनां परिमण्डलं केवलम् अद्वयम् । यच्च 'शून्यकुम्भ' इति पर्यालोच्य अभिधाने लिपिबन्धार्थं यतमाना आसीत् तत्राऽपि एका झरी स्तुतिरता ।

इतिहासः संकीर्णप्रायः ।

सर्वमेतत् अधिष्ठानस्य स्फुरणा - - -शाश्वतस्य स्फुरत्-प्रकाशः । अद्य सा पश्यति—तस्याः समस्याजडनारीत्वे शिशुमयझरी पथभ्रष्टा । अहंकारस्य तमोगह्वरे 'कोहऽम्- - -कोऽहम्'—आलोकस्य कुण्ठा केवलज्वाला । दैन्यम् - - - आत्मग्लानिश्च अद्यतनसमाजस्य नेपथ्य-स्वरद्वयम् । याच्ञा च एक एव पन्थाः । समयस्य सरल-परिसीमातल्पे इदानीमपि शरत्पूर्णिमायाः पुलकमनुभवति अलका । परं विखण्डनारीत्वनिमित्तम् अनुतप्तुं न सा समयं लभते । यदि कदाचित् लभते । तदा सा चिन्तयति —— "निशीथकुक्कुर कलहे चकितजनस्य निद्रा किं पूर्णतया अपसरति ?"

आत्मानमुपहसति अलका ।

निजत्वे निजस्वे च कियती न दूरता- - -?

वस्तुत आसु भवनासु किं वक्तुमिच्छति अलका ? केवलज्वालामयविखण्डचरित्ररूपेण सा संसारतः अपैष्यति ? एतावान् मात्रम् ? सा गम्भीरायते । अन्तःकरणे तस्याः स्वप्रकाशवादः स्पन्दनमुद्धरति—— "झरी अपि एकदा शुष्यति" ।

# उपनिषद्

सुबोधस्य मनसि एवमासीत्—

अतिक्रान्तं वयः । सेवा समाप्ता । मुक्तिः प्राप्ता । लिपिकजीवनस्य पूर्णाहुतिरभूत । इदानीमवसरसमयः । चरमं वयः । कुत्रचित् सामान्यकर्मणा शेषजीवनं नेयम् । अध्यात्मं च पाथेयम् । अनेन भगवतः सामीप्यं मिलेत् । सज्जनानां साधूनां च निकटे उपविश्य जीवनतात्पर्यं श्रवणीयं भवेत् । अनुभवोऽपि सद्यो भवेत् ।

परं निजाब्दपाण्डुरा अभिलाषकला—

अद्यत्वे तु न मठः छात्रनिलयः । न वाऽयं देवालयः । अत्र वाणिज्यजीविनो जीवद्देवाः । अधशि अधिकारी सर्वकारः । तदर्थे अधीशः कश्चिन् मुण्डी वा जटिलो नरः । नाम्ना स एव ईश्वरः । अन्तराले तस्य कृष्णधनस्य व्यापारः प्रतिपदमधिकारे अत्र न्यायालयस्य विचारः । प्रतिक्षणं च कार्यमस्य सर्वकारीय-कार्यालये निजजातकप्रचारः । साधारणोऽत्र कातरः ।

सुबोधः अत्र तस्य सेवाजातकं नवीकृतवान् । पुनश्च लिपिकः संजातः । वैराग्यमूले तस्य पुनरपि किंचित् निजसात्करणस्य साधनम् उपादानायितम् । प्राक् अधिकृततया प्रजाभिः काचित् संपत्तिः बलात् निजीकृता । तदनु कश्चन भागः पूर्वाधिकारिभिः निलयीकृतः । अवशिष्टभागे जीविनः केचन कर्मकराः - - -सेवकाः- - - अनाथाः- - -। न तेषां मठचिन्ता, न वा निजजीवनचिन्ता । परं प्रसादार्थं तेषां व्याकुलता । यदि कदाचित विलम्बो भवति तदा तेषां समाधानम् —'अद्य पुण्यदिवसः । पुजा पद्धतिबहुला । अतः प्रसादोऽपि विलम्बेन मिलेत् ।

एतत्प्रसादनिमित्तमेव सुबोधः संप्रति मठस्य जातकं स्वस्थीकर्तुं सर्वकारस्य कार्यालयं प्रतिदिनं गच्छति । सायं क्लान्तो भूत्वा स्वपिति । न कीर्तनं, न वा काचित् चर्चा मठस्य परिसरे नेत्रपथमागच्छति । कीर्तनं तु धनस्य । चर्चा पुनः केषांचन विरुद्धं एव । अवसरेऽस्मिन सोऽपि आत्मचर्चां कुरुते··किंचित् प्राप्तुम् ·· किंचित अपहर्तुम्- - -संचेतुमपि- - -।

एतदर्थं स गतप्रकरणं तरुणीकरोति । अधीशचरणे शरण्यो भवति । अधिकारिणं प्रीणयति ।

सर्वत्र प्रशंसावचनं करुणयति । भाग्यपर्णं च विगणयति ।

अनुभवः तस्य अभिनवः—

पार्थक्यसर्वस्वः भावः । तदानीं मुख्यलिपिक-भावेन स एव कर्मार्थिम् उपगन्तव्य आसीत् । अद्य तु स्वयम् अवस्तनम् उपनिषद्य प्राक्तनं मन्त्रयति । मन्त्रणायां पुनरपि उत्कोचस्य शंखलिपिः भ्रमिं वृणुते । न विना तेन कथंचित् कर्मणः परिपाकता ।

इदानीं सुबोधनिकटे पाथेयं समुज्ज्वलम् । उपनिषदर्थः स्फुटतरः । सामीप्यधर्मं उन्मुक्तः । दीक्षा अभिधाननिरपेक्षा । जीवनस्य परिशिष्टमपि सुस्पष्टम् ।

—*—

# बालुका

"यदि सकृद् अवनम्येत तर्हि बहुसमस्यानां समाधानं भविष्यति ।" अन्यस्मै बोधयितुं वचनमिदं सरलम् किन्तु स्वयम्- - -? नहि- - -। न कोऽपि कस्य व्यवस्थायां निवस्तुमिच्छति । प्रत्येकं हि स्वतन्त्रम् । प्रतिव्यक्ति निजत्वं वर्त्तते । परं निजत्वस्य को वा आभिधानिकः अर्थः - - -?

सैकते रेखाङ्कनं रुचिमधुरम् । तदा अनुरागिणी बालुकेयं कियती न आत्मीया ? किंतु रेखेयं कियत् कालपर्यन्तं स्थायिनी···?

कस्मिन्नेकगम्भीरनिशिथे मृदुशय्या यथा आत्मीया संजायते तथैव आत्मनः प्रतिक्रियां निजीकरोति विभुः । अद्यतनदाम्पत्यकलहः तस्य सकलप्रवृत्ति क्रोधरूपेण परिणमयति । स मनसा विजल्पति–'नहि···, नाहं प्रत्यावर्तनपथे' - - - । मनस्तस्य पुनः पुनः त्यागपत्रस्य कतिपयप्रतिलिपिमभिलषति ।

उपायास्तु अनेके । तथापि यं कमपि व्यायामबलाबल अतुकूल्य वा समस्यायाः समाधाने

मधुरता न विद्यते । किं वा कर्तुं शक्यते ? केन प्रकारेण वा मानसं बोधयितुं शक्येत ? एतदर्थं पुनः कियत्प्रहराणाम् आलोडनम् अपेक्ष्यते ? भोजनालये क्षुधानिवारणं तु संप्रति निरुपायविलासमात्रम् - - -यत्र आधुनिकसौजन्यमेव अर्थसर्वस्वम् ।

"मया त्रुटितम् । ···क्षन्तव्यम्"—इति वचनस्य अभिनयार्थमपि विभुः पश्चात्पदः । त्रुटिस्वीकारो हि एका पारंपरिकी कातरता ···वश्यता च । किमर्थन्- - -? अभिनये तु जनो निजस्वरूपं न त्यजति । अर्थः अभिनयश्च अद्यत्वे सिद्धिमार्गद्वयम् । यद्यपि अर्थो नास्ति तर्हि अभिनेतुं सामर्थ्यमस्ति किल—का हानिः ?

दूरमपश्यत् उदासविभुः । वटवृक्षस्य प्रशाखा इव अमूलमपि निम्नमभिगन्तुं यतते । मृत्तिकायाः सुरभिमाघ्रातुं कियान् वा समयः अवशिष्यते ? सहसा विभुः अन्वभवत् —क्रमशः स निजत्वमाविष्करोति । ततः अचिन्तयत्—इदमेव पत्नीनिकटे समर्पयिष्यति ।

ततः स गृहं प्रस्थितः ।

गृहे गौरवर्णा पत्नी विवर्णा । अश्रुस्पर्शे तस्याः चेलाञ्चलम् असवर्णम् । पश्चात् समबोधयत् विभुः— "मामि ! यत् त्वया उक्तम्- - -सम्यक् उक्तम्' ।

मामी पूर्ववत् दण्डायमाना । पतिवचनं निशम्य सा चिन्तयति---'तथापि असौ सुक्तभावेन आत्मानं न प्रकाशयति । पुनः ··· अहम्- - -??

—०—

## गुञ्जा

किंचित् मिश्रणम्- - -पुनः किंचिदपसारणम्···कतिपय दिनानां योगः - - - वियोगोऽपि विलासिनीजीवने सामान्यधारा- - -। गुञ्जा तस्या एकैव कन्या। तस्या विवाहात् परं वृद्धा विलासिनी कर्मणि शिथिला। विवाहव्यये तस्याः संचितं धनं समाप्तम्। ऋणभार इदानीमधिकः। ऋणपरिशोधनिमित्तं पुत्रो राजुः प्रवासी। प्रवासे कालं विनीय स प्रतिमासं ऋणधनं ददाति। प्रत्यावर्तनाय कालं न प्राप्नोति । विलासिनी तथापि उदरपोषणाय द्वारं द्वारं संचरति। उच्छिष्टं सेवते। दासीवृत्तिं स्वस्थीकरोति । आशां नवीकरोति । पुत्रं मनस्यति। तदर्थं देवेभ्यो मङ्गलं याचते। गुञ्जां स्मरति। तत्कृते अपि लोतकं झरयति।

पूर्ववत् दिनभिक्षुः आगच्छति । भिक्षां याचते । द्वारे उपविशति । जलं पिबति । दुःखसुखानि आलपति । विलासिनी भिक्षां ददाति । पुत्रनिमित्तं मङ्गलं कामयते । पुनश्च निजकथां श्रावयति---

"किं वा अपराद्धं मया । यदर्जितं सर्वं दत्तम् । अधिकं तु ऋणं कृत्वा समर्पितम् । तथापि तेषाम आशा न पूर्णा ? किमधिकं वा अकरिष्यम् ? प्रतिमासं तदीयगृहे चरणं स्थापितम । यत् मिलितं तदपि दत्त्वा तेषां निकटे शरणं वाञ्छितम । तथापि ते न कारुणिकाः । सामान्यधननिमित्तं ते मम कन्यां घातितवन्तः ? मानिनी गुञ्जाऽपि मे ततः पूर्वं न किमपि न्यवेदयत् । तत्रैव निपत्य मृता- - -।

दन्तुरमुखे तस्या विलापो निष्ठुरः ।

विलासिनी वृद्धा पुण्यदिनम् अन्वेषयति । पुनः पुनः तदेव मनस्यति । मन्दिरं गच्छति । देवं पूजयति । पूजकाय दक्षिणां ददाति । पादोदकं पिबति । विल्वपत्रं स्वादयति । ततः प्रणमति । पादधूलिं मस्तके लिम्पति । तदनु परिपृच्छति--

"भगवन् ! राजुः मम अनेकदिनेभ्यः प्रवासी। वराकः ऋणं परिशोधयति । पत्रमपि न ददाति । स्वस्थो वा अस्वस्थो वा कुतोऽहं जानीयाम् ? महाभाग ! प्रश्नकुण्डलीम् अङ्कयतु । गणनां करोतु । पश्यतु, स कुशलो वा ? अहं दक्षिणां दास्यामि । नान्यथा चिन्तयतु" ।

दरिद्रपूजकः तरलो भवति । क्षीणोऽपि कारुणिकः संजायते । आत्मनि रुचिं रचयति । शुभं सूचयति । वृद्धा अञ्चलं प्रसार्य पुनः कल्याणं प्रार्थयति । देवकुङ्कुमं ग्रन्थीकृत्य प्रतिष्ठते ।

शिथिलकर्मप्रसरे सा दासी भवति । बाल-सेविकाभावप्रचये पुनः सा अस्पृश्या भवति । वसन-च्छिद्रेषु प्रविशति शीतसमयः । दरिद्रदीपे तैलं पूरयति गोधूलिः । गलत्सस्ये विहगानामुत्सव-माविर्भावयति मार्गशीर्षस्य सरणिः । सा तु कुटीकोणे उच्छिष्टं स्वादयति ।

रक्तकृष्णदृश्यचये अद्यापि तस्या मातृत्वम् उच्छलयति गुञ्जा । गृध्राणां चक्रकेलिषु सैव नयने लोतकं भरति । ग्रामान्तश्मशाने यस्य कस्यापि

चिताधूमः तामेव स्मारयति । दुर्बलमनोबन्धे सैव प्रात्यह्निकी संध्या संजायते ।

सेयं विलासिनी जरातुरा - - - । सा पुनः काकरावेषु कदाचित् अशुभचिन्तया शंकिता भवति चेत् कदाचित् पुत्रस्य प्रत्यागमनमाश्रृणोति । पुनरपि प्रसन्ना भवति-भिक्षुः हि तस्या द्वारमागच्छति । पथिकः तामेव जलं याचते । अतिथिश्च भोजनं गृह्णाति । पूजकः पूजाजलेन तस्या गृहं पावयति । अतः सा दानं करोति । दक्षिणां ददाति । ये वाञ्छन्ति तेषां साहाय्यमपि करोति । कदाचिदपि कांस्कान् उपकरोति । अन्ततः आत्मना गुञ्जति--अनेन राजुः मे सुखी भवेत्" ।

—×—

# रत्नाकरः

अनेकमतिक्रम्य रत्नाकरः पुर आगतः । पुनः कियद वा पुरस्तात् गमिष्यति ? इदानीं सामर्थ्यं नास्ति । अतः स चतुष्पथमेकं निरचिनोत् । तत्र आत्मानं निह्नूय सर्वं साधयिष्यतीति सिद्धान्तितवान् । तदनु अत्र बहवो नारदा बद्धाः । नैके भगवन्तो निष्पिष्टाः । अनेके ग्रामनगरदेवाः पालिताः - - -घातिताश्च । किन्तु कालप्रवाहेऽस्मिन् नैकमपि दृश्यं तस्य सरलहृदयं तरलयितुं ससर्थमभूत् ।

अद्य तु तस्य स्वप्नमेकमवशिष्यते । तदेव सफलीकरणाय यत्नः तस्य अव्याहतः । एकदा स शिष्यान् आकारितवान । सर्वान् एकीकृत्य सविषादमवदत्—'पश्यन्तु' यत् यस्य अर्जनं तदेव तस्य भोगाय उपयुज्यते । संप्रति सर्वतो मे संपर्कः छिन्नः । शेषवयः पर्यन्तं बहूनि द्रव्याणि संगृहीतानि । तेषामुपभोगस्तु सम्यक् न कृतः । भवन्त इदानीं सर्वकारीयाः । सतसु मम शिष्येषु यदि मे स्वप्नं फलवद् न भवेत् तर्हि कदा भवेत् ? किं तावत् स्वप्नमिति शिष्या विस्मिताः ।

रत्नाकरः सहर्षमवदत्—अधुना सर्वत्र अट्टशूलमूला नीतिः प्रसरति। इमामनुसर्तुं वयो मे नास्ति। अतः राजधान्याः चतुष्पथेऽस्मिन् अट्टशूलमेकं निर्मातुमिच्छा मे बलवती। भवतां सहायः कर्मणि अस्मिन् नितरा मपेक्ष्यते।

शिष्याः सानन्दं प्रत्यभृण्वन्—

अत्र का चिन्ता ? अस्माकं सर्वाऽपि नीतिः अधुना अट्टशूलापेक्षणी। अट्टशूलमवश्यं निर्मास्यते। भवतः परमेतत् अस्माकं कृते उपयुज्येत। तत्र का हानिः ?

रत्नाकरस्य संदेहो घनीभूतः। तथापि अभिनयेन छलेन च तान् अतोषयत्।

अट्टशूलस्य प्रतिष्ठादिवसः।

आलोकपायिनी रजनी पातकिनी इव। अद्यतनसंकल्पमन्त्रणामुच्चारणे मत्तमुखराणि वाद्ययन्त्राणि। अट्टशूलस्य शोभा तु दूरात् बल्मीकराशिरिव। लघुद्वारेषु दृष्टा दृश्यन्ते बल्मीकीभूताः शिष्याः। महोत्सवः मधुमादितः। मार्गो यानमयः। चतुष्पथ उच्छिष्टसंकुलः। पार्श्वस्था कुटीवसतिः एकादशीव्रते मङ्गलमयी।

रत्नाकरः अभिषेकवेशे श्रीमान् । संकल्पः समाप्तः । पूजा उद्यापिता । प्रसादो वितीर्णः । उच्छिष्टं निक्षिप्तम् । कुटी-वसति - धूमेषु प्रातरवतीर्णम् ।

सहसा वार्ता प्रसारिता—

'रत्नाकरः हृद्रोगद्वारा आक्रान्तः···मृतश्च···' साड़म्बरं शवस्य शोभायात्रा अभूत् ।

रत्नाकरस्य मरणविवरणं निशम्य बद्धनारदाः प्रसन्नाः । परं तेषां मुक्तिः नाभूत् । अपरद्दिवसे ते अशृण्वन्—रत्नाकरः 'बाल्मीकिः' इति मरणोत्तरमुपाधिं प्राप्स्यति ।

—*—

# प्रत्याहारः

चतुर्दशवर्षाणि व्यतीतानि ।

व्यवधाने केवलायते कालराशिः ··· घटनाप्रवाह··· स्मृतितरंगः···वेदनास्कन्धः··· । पुनश्च वितृष्णप्रहरस्य अवशेषः··· अनुतापस्य प्रकीर्णांशः··· । प्रवृत्तिपथे अनुबन्धो विविक्तः । अभिमाने प्रायोवादो विविधः ।

कुन्दा निरैक्षत ।

कपाले सरलरेखाराजिः । केशेषु काशविभा खल्वाटप्रिया । नेत्ररीतिः गभीरा । भीरुभ्रूलतायां कालस्य पलितस्पर्शः । कोपलमुपत्यकायते ।

कुन्दा अपृच्छत् ।

—पुनः किमर्थं प्रत्यागतः ? किं वा अस्ति मन्निकटे । यद् आसीत् तत् सर्वं हारितम् । कस्मिन् आकर्षणे पुनर्भवान् वशवर्ती अभूत् । अत्र तु सर्वं भवदर्थं तदा अरुचिकरमासीत् । इदानीं पुनः तानि एव वस्तूनि । कुतो वा नूतनं वस्तु अहम् उत्प्रेक्षितुं क्षमा ? भवान् किमपि

नूतनमानीतवान् वा ? किमपि नवीनं श्रावयिष्यति वा ?

सुगतो गम्भीरः ।

नेत्रपथे तस्य कुन्दा संकीर्णसमयस्य उत्कीर्णमार्गरेखा ...च्युतपुष्पस्तवकशाखा ... निजस्वलिपिविपुला सा च्युतवर्णा संचितमातृका...।

अतीतगन्धःसंधानलिप्सुः ।

तद्दिने सुगतः कलहमारभत ।

—किमिच्छसि - - -किमर्थं मम कर्मणि बाधा ? यदि न रोचते तर्हि निजगृहे स्थित्वा स्वकीयव्यवस्थां कुरु । सदा कलह. कमर्थम् ? मम किमपि लक्ष्यमस्ति । कश्चित् आदर्शो वर्तते । तन्निकटे तु न कस्यचिदपि स्थानम् ।

—किं वदति भवान् ? कन्या जाता । अहमत्र एकाकिनी । पुनश्च सेवाजिविनी । गृहकर्म करोमि । बहिः कार्यं निभालयामि । साधु वा असाधु सर्वं च सहे । वक्तुमपि मम अधिकारो नास्ति ? कथमेतावन्तो जनाः प्रतिदिनं गृहमागच्छन्ति । किं कर्म भवति ? यदा पृच्छ्यते तदा संघानिर्माणं भवति- - - शान्तिप्रचारो भवेत् इत्येव शृणोमि । तस्मात् किं वा मिलिष्यति ? अनेन व्ययभार-स्तु वर्धते । सर्वमेतत् किमर्थम् ? निजवृत्त्या परसेवा

किमर्थम् ? इतो गृहे शान्तिर्नास्ति । बहिः शान्तिप्रचारो भवति ? धन्यो भवदीय आदर्शः- - -!

तदनु सुगतस्य सन्न्यासः ।

संघो निर्मितः । शिष्याः प्रशिक्षिताः । संस्कृतेः प्रचारः कृतः । शान्तिवाणी च प्रतिग्रामं प्रतिगृहं च प्रापयितुं यत्नः कृतः । बहुत्र शाखा उद्घाटिता । सहचरा नियुक्ताः । धनागमनिमित्तं विविधा योजना प्रस्तुता । नियतप्रचारकाणां कृते वृत्तिः निश्चिता । संघनाम्ना निर्दिष्टधनराशिः वित्तकोशे स्थापितः । शान्तिसंघः संप्रति महान् । प्रचारका अनेके ।

किन्तु - - - - - - - - - - ।

तेषां मध्ये अद्य कलहवह्निः । धनभागनिमित्तं नाना योजनाः । नवप्रचारार्थं विभिन्ना रीतिः । प्राधान्य मोहः पुष्कल । अधिकाराय संघर्षः व्यवस्थापन्नः । सुगतः निजप्राधान्यस्य अवमाननम् अलक्षत । कर्मसमीक्षां च कृतवान् । ततः सर्वान् आहूय अवदत ।

—इदानीं संघस्य आवश्यकता नास्ति । शान्तेरपि न गुरुत्व

मनुभूयते । शान्तिः न कदाचित् जीवनस्य लक्ष्यं भवितु महति । संघं विरुजत- - -।

सहसा कश्चित् शाखामुख्यः भर्त्सितवान् ।

——भवान् संघस्य विरुद्धाचरणं करोति । संघस्य नियम-लंघनं करोति । अतो भवान् दण्ड्यः । स्वेच्छया संघतो निर्गच्छतु । अन्यथा विताडनम्- - -।

सुगतः प्रत्यागतः ।

न अद्य पूर्वसंकल्पः । न वा उत्साहः । न शान्तिचिन्ता । केवलो विषादः - - - नेतिवादः - - - शान्तिः न कदाचित् जीवनस्य लक्ष्यम् ।

कुन्दा व्यवीदत् ।

——इदानीं किं वा कर्तुं शक्यते ? किं वा वर्तते मयि ? कियद् दिनतः पूर्वं यद्यत्र आगमिष्यत तर्हि किंचिदहम् अदास्यम् । सुगतः कुन्दायाः मुखं पश्यन् स्थिरः ।

कुन्दा विषण्णभावेन अपृच्छत् ।

——इतो भवान् कुत्र यास्यति ?

सुगतो निजखल्वाटपार्श्वे करं चालितवान् । ततो

दर्शितवान् । करतले पलितकेशचयो विश्राममिच्छति ।

कुन्दानयनतः अश्रुधारद्वयं कपोलतः अवरुह्य चिबुकमस्पृशत् । सा अवदत् ।

--तर्हि भवान् अत्र निवसतु । नाऽहं भवतः कार्यप्रसरं प्रतिबध्नीयाम् ।

वचनेऽस्मिन सुगतः दुर्बलनेत्रद्वयं क्षणाय न्यमीलत् । अभासत शान्तिप्रचारस्य अनुरोधशैली- - - इतस्ततः परिभ्रमणस्य प्रकाररचना- - - ततः आत्मनः प्रत्याहृतिः- - -।

—कुन्दाया दृष्टिपथे सुगतस्य मुखमण्डलं तथापि स्पष्टम् । सा अनुनीतवती ।

--भवान् अत्रैव निवसतु । नाऽहं भवन्मनसि बाधां दद्याम् । शान्त्या निवसतु । शान्तिमाप्नोतु ।

कुन्दा अद्य शान्ता । तस्या उद्वेगः समाप्तः । आन्तरकोलाहलः समाप्तः । अभियोग उपसंहृतः । तस्या अभिमानम् आत्मनि निर्लीनम । शान्तिः आन्तरिकी ...मानसिकी- - - आध्यात्मिकी इयं च आवेग-स्पृहा-शून्या स्थितिः- - - सेवासर्वस्वा प्रतीतिः- - -।

सुगतस्य पुरस्तात् आद्यन्तभावद्वयी केवलं प्रत्याहारं रचयति । मध्ये संघर्षप्रियः कालखण्डः प्रचण्डः । कोलहलामयी च कार्यावली । पुनश्च प्राप्ति-लिपसा…प्राप्तिविरहः - - -। ततो निजस्थप्रत्याहारे संयोगवलयस्य अशरीरी स्पर्शः- - -बद्बुदस्य मिश्र विस्फोटः- - -अनेकान्त एकान्तः…कान्तः- - -शान्तः- -।

—x—

# आरोही

केचन जन्मान्धाः । कति जना अन्धीकृताः । पुनः केचन नेत्रवन्तोऽपि अन्धाः । कति मूकाः । केचन मुखे करं निधाय नीरवाः । केचन केवलं चित्कुर्वन्ति । इयं संसारस्य समान्यधारा । इयमेव जीवनत्रिवेणी ।

संघर्षोऽत्र अन्तःस्वरः ।

श्वः साक्षात्कारः ।

संजयः प्रस्तौति । स्पर्धालवः अनेके । जीविकास्थानं तु परिमितमेव । एवम अनेकवारं स साक्षात्काराय

आकारितः। भाग्यं तु अपरिवर्तितम। स्पर्धार्थम् अस्त्रं नाम तन्निकटे ग्रामदेवतायाः पुष्पप्रसादः। अपरपक्षे कृष्णधनम्। उभयोश्च संघर्षः। अस्मिन् विजयिनो नैके सहाध्यायिनः।

"अरे, संजय! कदा आगतः? किं क्रियते अधुना?" —बन्धोरजयस्य एतादृशप्रश्ने मौनं तिष्ठति संजयः। अजयः अधिकारी। तस्य अधीने कानिचित् कर्माणि सन्ति। तदर्थम् आत्मान मवनमयति संजयः। किंतु बन्धुः विस्मरति—"अरे! इदानीमहं व्यापृतः। अन्यदा कदाचित् आगच्छ- - -विचारयिष्यामः"।

संजयः प्रत्यावर्तते। विश्वासे तस्य तथापि सहायकः ग्रामदेवतायाः पुष्पप्रसादः। माता व्याकुलाभवति। पिता चिन्तया रोगशय्यामाश्रयते। भगिनी विवाहस्य अवसरम् उत्प्रेक्षितुमपि न शक्नोति। निजकथा तु व्यथा एव। तथापि माता वात्सल्यमुखेन अनुनयति—"अरे संजो! जनपदं परित्यज्य ग्रामं प्रत्यागच्छ। सेवावृत्तिः नापेक्ष्यते।" परमुन्नतवयसि तस्याः कथायां माधुरी कुत्र? माधुरी इह मिथ्यामूला। मिथ्या नाम संप्रति परप्रवञ्चना। इयमेव सभ्यानां जीविका ··अपराधिनां जीवनम्- - ·अर्थिनां धर्मः।

आरोहस्तु आवश्यकः।

एतन्निमित्तं सामान्यजीविका गृहशिक्षकता। इमामाहृत्य मार्गकुक्कुर इव गृहतो गृहान्तरं संचरति संजयः। गृहपतेः चक्षुषा स भिक्षुः। गृहिणी-व्यवहारे स दीनः--कश्चित् दयनीयो जनः। शिशुसाहित्ये तु महान कश्चित् पुस्तक विशेषः। यदा गृहपतिः प्रत्यागमने विलम्बं करोति तदा गृहशिक्षकमेव आदिशति--"बाबुजी इदानीमपि नागतः। कृपया विपणीतः किंचितद्रव्यमानेतव्यम्"। वचनेऽस्मिन् जीविकामात्रनिर्भरो गृहशिक्षको वा कथं चकितो भवेत् ?

मर्यादा तु मूलतो नास्ति। मर्यादाहानिः कथं स्यात् ? एवं विचन्त्य संजयः संतुष्टो भवति। मासान्ते नूनम् आवश्यकानि कियन्ति रूप्यकाणि। इदानीं वृत्तपत्रविक्रेता आगमिष्यति। आपणिकः सद्य एव धनं याचिष्यते। गृहस्य महाप्रभुः इदनीमेव भाटकनिमित्तं रक्तनेत्रं प्रदर्शयिष्यति। किं वा कर्तव्यम् ? सर्वमेतत् निभालनीयं खलु ?

इयमवस्था। एषा परिस्थितिः। तथापि समयेऽस्मिन् मनः परिचितं मुखं कमपि स्वरं वा

अन्वेषयति । सम्मुखे चपलनयना प्रीतिं वितनुते । अञ्चलप्रसारे मलयो मधुमान् भवति । मृदुवचने मदिरा हृदयं मादयति । नयने तृष्णा स्वप्नानि भरति ।

परं पारिपार्श्वे प्राकारः ।

होममध्ये एव घृतविन्दुः निपतति । पिपीलिकानां भागस्तत्र कुतः ? केचन सदैव तमसि तिष्ठन्ति । केचन तमसि स्थित्वा प्रकाशस्य स्वरूपं चिन्तयन्ति । केचन प्रकाशे निवसन्तोऽपि तमसि एव कार्यं निर्वाहयन्ति । प्रकाशस्य आशीर्वादे तमसा आत्मानं परिपुष्णाति । सतीत्वं च प्रख्यापयति यामिनी । इयमेकाऽपि धारा हताशदर्शने । अयमपि शीतलस्वादः आरोहस्य अग्रपथे ।

संप्रति उपरिस्थ आसनारूढः । तदीयमासनं सुदृढं भवतु इत्येव तस्य नीतिः । नान्यः कश्चित् योग्यः । एतदेव प्रमाणीकर्तुं स आरोही...अभिषिक्तः ।

समाजो विपर्यस्तः ।

संजयनिकटे अर्थ एव पन्थाः । परमग्रे सोपानानि बहूनि । पुनस्तदग्रे अधिकारिणः पिपासुहस्तः । पश्चात् सोपाने पङ्क्तिबद्धानां चरणाकर्षणम् । मस्तके प्रहारः ।

चरणे स्खलननिमित्तं शृङ्खलम् । परिपार्श्वे स्पर्धाप्रियं कृष्णधनम् । मध्यस्थविश्वासे ग्रामदेवतायाः पुष्पप्रसादः । लक्ष्यम् आरोहणम् । नयने तिमिरम् । हृदये धूमनिकरम् । मनसि केवलो विस्फोटः··· विस्फोर···।

—*—

## यतिपातः

: पौर्वापर्यतात्पर्यं विना घटना न प्रवर्त्तते । न वा कथाप्ररोहः आरूपमङ्कुरयति । परिणामविन्यासे तु तात्पर्यमणुभाष्यमेव ।

नर्मदा वधूः ।

स्वभावचञ्चला सा इदानीं विवाहस्य आभिजात्ये मनाग् गम्भीरा । परिपार्श्वे नवीना जनाः । परिवारो न परिचितपूर्वः । प्रदेशश्च तथा । नर्मदा भयविनीता । गृहे चरणं संयम्य विचरति । शनैः जल्पति । मृदुतया आकारयति । सरलरीत्या च व्यवहरति । प्रतिकार्यं लज्जामेव भूषयति ।

अतः श्वशुरः साधु वदति। श्वश्रुरपि प्रशंसति। —अहो, भाग्यम्! वधूः मे साक्षात् लक्ष्मीः।

श्वशुरोऽपि तत् समर्थयति। देववर्गश्च तदनुरूपतया तामाद्रियते। अपरिचितं जनं विलोक्य क्वचित् उत्साहः स्पृहामूलो भवति। कदाचिदपि केचन आत्मानं नाना रीत्या दर्शयितुमभिनयन्ति। अनेन ते आत्मनो गुरुत्वं प्रतिपादयितुमिच्छन्ति। परं ते उपहसिता भवन्तीति ज्ञातुं न प्रभवन्ति। इदानीं श्वशुरः स्नानवेलायां रामनाम जल्पति। भोजनवेलायां च भगवत्-स्तुतिं गायति। श्वश्रूरपि परच्छिद्रजल्पनं परित्यज्य विरामसमये पुराणपारायणं करोति। अन्ये च कलहं न्यूनीकृत्य कोपप्रकृतिं शिथिलयन्ति। सद्भावः सौमनस्यं वर्धयति।

नर्मदा अनुभवति—पितृगृहतः पतिगृहमिदं नूनं सुखास्पदम। पितृगृहे सा समान्यद्रव्यनिमित्तम् अभिमान करोति स्म। पिता कदाचित् कुपितो यदि क्वचित् माता भर्त्सयति स्म। किन्तु अत्र सर्वे शिष्टाः प्रतीयन्ते। अवश्यम्··, यत्र पितरौ शिष्टौ तत्र सन्ततयोऽपि तथा।

पूर्वापरसंगतितले समयराशिः विरसः । अभिनयभूमिकायाम् अवरोहः संकेतितः । मृदुनिदेश आदेशायितः । गृहणीमर्यादायां गृहमेव भारायितम् । निर्मदायाः चिन्तने व्यापृतिरिदानीं तत्त्ववैशारदी ।

प्रातरुत्थाय सा पश्यति —

प्रतिदिनं परिष्करणमपेक्षन्ते परिवारस्य नैकानि उच्छिष्टपात्राणि··· वसनानि··· मलमूत्रपिञ्जीकृतशिशु शय्यादीनि । पुनश्च शुद्धिमपेक्षते पाकशाला···सभाजन प्रकोष्ठम्···अलिन्दचत्वरम्···अङ्गनम् ··· ।

श्वश्रूः निष्कृतिप्राणा । श्वशुरः विश्रामलिप्सुः । अन्ये च कर्मविमुखाः । गृहस्य प्रतिप्रकोष्ठमालस्यशय्या नर्मदाया विश्रामकक्षं कुक्षीकरोति । अहोरात्रं समीकृत्य नर्मदा केवलं घर्मापसारयति । अन्ततः आविष्करोति— लाक्षारञ्जितचरणे इदानीं रेखाः सहस्रायन्ते । लाक्षास्थाने मृद्रागः व्रणानि सृजति । कररेखायां चुल्लिका साक्षात् पक्षपातिनी । नखकोणे रोगः मार्गं विमृशति । तथापि परिवारसिद्धान्ते सा सेविका । गृहिणी हि सेवाधर्मिणी ।

अद्य पूर्वरागो विधूतः । श्वशुरः प्रतिकार्य्यं निन्दति । श्वश्रूश्च कलहायते । नेदानीं पुराणपाठः ।

न वा कश्चित् स्तुतिगानं करोति । पतिः आदिशति–इदं कर्तव्यम् । श्वशुरः तत् खण्डयति । श्वश्रुश्च निजाधिकारस्य सीमाङ्कनं करोति । सर्वे परस्परतः किमपि नु किमपि निह्नोतुमिच्छन्ति । गृहस्य प्रतिद्वारं पृथक् स्वप्नः । गवाक्षस्य प्रतिवातं च पृथक्चेतना । प्रतिपदं छिद्रानुसंधानम् । प्रतिवचनं पुनः असहिष्णु-भावः ।

एतदर्थमेव कलहः । कलहेऽस्मिन् सर्वेषां स्वभाव उन्मुक्तः । नर्मदा कुतो वा निवर्त्तिष्यते ? तत् कृते तु यतिपातः स्वाभाविकः ।

—×—

# उपलपथे

· नूनं विपत ।

पत्नी मे पीडिता । इदानीं सा चिकित्सालये । मनो मे व्याकुलम् । मार्गो न दृश्यते । परितो मेघप्रभा । कर्ण-कुहरे मे काकरावः । निमीलने प्रतीतिः अलमर्था । तथापि जपे आवृत्तिः "अविघ्नमस्तु" । किन्तु चिन्तायां मन्त्रान्तरं नास्ति । देवान्तरं नास्ति, साधनान्तरं नास्ति, अन्तराभावे अहमेव अहम्···।

सहसा वार्ता लब्धा ।

सा विपन्मुक्ता । पुत्रो मे जातः । सद्यः स नीललोहितः । मम कर्मणः गुप्तप्रतीतिः । मम प्रवृत्तेः निर्लिप्तः अंशुमान । न माता, न वा पिता, स्वयं स केवलः- - - क्रियारम्भणः । आलये रणप्राणः । किंतु बन्धुहृदये अहं रसिकः - - -रासप्रियः- - -अर्थापत्तेः अन्यतमो दृष्टान्तः । हिताकाङ्क्षिवचने अहं मुक्तः- - -"कन्या हि न जाता" । किन्तु समीक्षापथे उपलमेव फलस्य पलितपरिणतिः ।

पत्नी स्वस्था अभूत् ।

एकदा सा निरदिशत्--'पुत्रस्तु जातः । अस्माकं भाग्यमाविर्भवेत् । अतः ज्योतिषिकमाकारयतु । पुत्रस्य जातकगणनां करोतु ।" अहं तु विमूढः । तस्याः कथा मम कथा । सा चेत् आर्ता मयि नूनं व्यथा । किमहं करिष्ये ? अविरहे मे विरहः । अविलापेऽपि मम विलापः । अतः तदीयविश्वासे ममाऽपि 'हुँ-कार' श्वसितिः । ज्योतिषिक आकारितः । गणना कृता । फलं च घोषितम--"इदानीं पुत्रोऽयं पितृपक्षे हितकारी । मातृपक्षे च पीडादायकः । पत्नी मे विक्षुब्धा ।

---किमर्थम् ? अहं दशमासपर्यन्तं गर्भं धृतवती । औषधिद्वारा तं चारुरीत्या लालितवती । कथं स मदर्थं पीड़ाकारी । नहि, नेयं चारुगणना । पुनः गण्यताम् ।

ज्योतिषिकः अवदत् ।

—भाविनि काले अयं पितृपक्षेऽपि अहितकारी ।

सहसा अहमपि विस्मितः । किमयं घातको वा अपराधी वा स्यात् ? अद्यत्वे प्रतिपदमपराधः । प्रतिक्षेत्रं च दुराचारः । तर्हि, परिवेशं विहाय पुत्रो मे अन्यत्र कुत्र वा निवसेत् ? तथापि तमहं स्वतन्त्रतया पाठयिष्यामि । विज्ञान दिशा च प्रवर्त्तयिष्यामि । तेन किं सः अपराधी

न भवेत् ? साक्षात् अपराधी न स्यात् । अपराधस्य मार्गनिर्माणं कुर्यात् । अपराधस्य प्रकारं वा पद्धतिं वा रचयेत् । शिक्षा हि अद्यत्वे अपराधस्य अराधिका··· विरोधस्य वर्धकी···युद्धस्य च बोधिनी । युद्धमिदं न वृत्तिदुर्वृत्तिमध्ये । परं वृत्तिप्रवृत्तिमध्ये ।

पत्नी मे सान्त्वनां दत्तवती ।

—ज्योतिषिकः सम्यक् वदति । भगवत इच्छा एवमपि स्यात् यत् आगामिकाले केवलमपराधिनामावश्यकता भवेत् । तदर्थमयम् आविर्भूतः । अस्माकं का हानिः ?

वयं वा कियत्कालं जीवामः ?

किन्तु अद्य मन्निकटे मन्त्राभावः··· पूज्याभावः···। अहंभावश्च मे मधुरभावः । स्वभावे महाभावः विशिष्टोऽपि अस्पष्टः···अस्फुटः··· ।

—o—

# शेषांकः

पिता आगमिष्यति ...।

बालाः प्रतीक्षन्ते । पुत्रः मार्गं पश्यति । कन्या समयं निश्चिनुते । पत्नी चा आत्मानं सज्जीकरोति । परमागमनवेला अत्येति । श्रीवेला संध्यायते । वन्दने पुण्यायते पुनश्च श्वस्तनधारा । विरक्तिः नवीभवती । उपस्थितो भवति क्लान्तो गृहपतिः ।

स एवाऽयं जनः । ... समस्याश्रीमान् निष्करुणः । सकलचिन्तायामस्य परिवारपरिपोषणम । धनम् - - - धनम् - - - पुनर्धनम् । स्तोकं पिवनम् - - क्षणं जीवनम् - - -। अर्जनमेव अर्जनम् । तदर्थं च जीवनधारणम् । प्राप्यमिति तु तदेव । अतः शाठ्यम् आचरणम । छलं च बलम् ।

स्वनचरितं समासयति रात्रिः ।

अङ्कगणनायां जनोऽयं निमज्जति । सर्वत्र अङ्काः- - - दिनप्रवाहे- - - वयः प्रभावे - - -सामाजिकविभवे- - - संचयपुस्तिकायाम् आहारे- विहारे- - -व्यवहारे- - ।

आशये अङ्कः अधिकायते । विषये च रसायते । प्राचुर्यं परिचये स एव दर्शनीयसारांशः । अङ्को हि दृश्यपर्याये मर्यादाविशेषः ।

अङ्कगणनया जनोऽयम् एकाकी- - -क्रमशः वियुज्यते—पत्नीतः- - -पुत्रतः- - -कन्यातः ··परिवारतः ··परिवेशतः । सम्मुखे उपस्थिताः भवन्ति नगराणां जनपदानां च कति मार्गाः···केचन प्रासादाः पुनश्च गृहनिर्माणाय उन्मुक्तभूखण्डः···शोषणाय जीविकाया निर्दिष्टकेतुदण्डः- = -

न अङ्कः समाप्यते । न वा गणना शिथिला भवति । वातायने रात्रिः न तमो विमुञ्चति, न वा प्रकाशं दूरीकर्तुं शक्नोति । लोलुपमेघमालातले चन्द्रस्तु क्लीवप्रतिभानसत्त्वः । तारकाराशिः अंकसर्वस्वः । निमीलनविश्वे जनोऽयं निस्वः ।

आपणतः आपणान्तरगमनमत्र मनोऽनुगुणता । इतस्ततः स्वादग्राहकता च आधुनिकता । अस्यां जनोऽयं जीवति । परितो व्यस्ता अर्जनधारा । यान्त्रिकमनोभूमितले गतानुगतिकता एव क्लान्तजीवनी । किमधिकं वा कर्तुं शक्यते ? जनोऽयं क्षणगणनया प्रविशति प्रतिष्ठते च । नयनाग्रे घटना संघटिता भवति । तदर्थं

मस्य प्रतिक्रिया नास्ति। प्रतिपदं 'किं वा मिलिष्यति ?' को वा लाभोऽस्मिन् ?' इत्येव भावना। अन्ततः क्लान्तिः ...अथवा उदासीनता- - -।

न कर्त्तव्यनिष्ठा, न वा नीत्यनुवर्त्तिता अस्य भावराज्यं नियमयति। यथाकथंचित् निर्वाह एव प्रधान पथः। हिमीभूतम् अस्य मनः। अधिकारस्य अभिमाने पदस्थोऽयम् आत्मनि केन्द्रस्थः—भ्रश्यतु नाम...नश्यतु नाम सर्वमेतत्तु साधारणसंपत्। काऽत्र चिन्ता ? निजकृते यन् मिलिष्यति तदेव लक्ष्यम्'।

अद्य तु अस्य नयने ज्योतिर्नास्ति। श्रवणे शब्दो नास्ति। केवलं वर्त्तते जिह्वायां स्वादः। हृदयेन अयं दुर्बोधः। मनसा स्थाणुः। शरीरेण कबन्धः।

रात्रिः घनीभवति। स्वप्ने आविर्भवति ध्वंसः ...निर्मितस्य अवशेषः। जागरणे तु आचारस्य विपाकः ...कर्मणि आतङ्कः। अनुभवे स एवांऽकः परितो विच्छिद्य स्वयमयं विशेषांकः· शेषांकः··।

—*—

# पश्चिमचक्षुः

एकदा नदीकूले अहम् उपविष्टः । नदी उक्तवती – 'किं पश्यति भवान् ?' अहं किमपि वक्तुं समर्थो नासम् । ततः सा उक्तवती–मुक्तनयने किमपि न दृश्यते । नेत्रं निमीलतु ..उपविशतु...।

तथाऽहं कृतवान् । एकहस्ते मम मातृकाम् अपरहस्ते च मालां संस्थाप्य सा उक्तवती–'यदि किमपि वक्तुम् इच्छा भवेत् तर्हि मालासहायेन वदतु ।यदि वा द्रष्टुमिच्छा भवेत् तर्हि मातृकासहायेन पश्यतु ।'

ततो मनसि मे प्रादुरभूवन–बहूनि दृश्यानि .. नैकानि रूपाणि ... अगणितानि नामानि ... असंख्यलपनानि नाना च संकेताः । तदनु विघूर्णनं प्रचुरम् । क्रमशो नदीं प्रति मे स्नेहो वर्धितः । अहो ! नदीयं कियती न आत्मीया ? सकलदृश्ये आविर्भूतं तस्या एव रूपम् .. सकलवचने तदीयं च नाम । प्रचीकटाक्षे पल्लवितं कालकल्लोलम् । मनोमन्थने पौर्णमासी निगूढा अभूत् । रतिमुद्रायां तरुण नर्तनम् उत्तीर्णम् । स्पर्शविशेषे पुराणस्तु समीरणः ।

चक्षुरुन्मीलितम् ।

सम्मुखे तित्तिरिभक्षितस्य अवशेषः- - -उपनिषण्णस्य असन्तोषः - - = क्रौञ्चस्य विरहविशेषः...कुमन्त्रणायां भ्रामरीनिश्वासः आदिपदस्य अपभ्रंशः .. कलहस्य ध्रुपदे सर्वो लेशः ...लेशः...।

लेशो विषायते । अणुरहस्ये वारुणी रणशरणा । त्राणवरणे धरणी तु करुणप्राणा । उष्मनिःश्वासे महाकाशो दिगम्बरः । आत्मदर्पणे तारका स्वयमेका ज्वलनविवरणी । भावव्याजेन अभावो विभुः । व्यवधाने बोधः विक्लवप्रतिभूः । विचारे न्यायो वैयक्तिकः । आचार इच्छापरकः । स्वैरता सार्वभौमकला । मनोऽनुकूलता स्वातन्त्र्यस्य सीमामेखला ।

इयं मुक्तिपथस्य अनुपमधारा...

अहं चकितात्मा ।

सम्मुखे नदी निष्प्राणा । तस्या दीर्घकङ्कालो मरुगर्भः । शुष्कतटे पीडा जड़ावलीढा । बालुकाया दैनन्दिनीपृष्ठे क्षतपरिभाषा । आलिंगनचिह्नसंकलने सेतुप्रकल्पः असमर्थः । स्पर्शमात्रं शुष्कगह्वरस्य उष्णचीत्कारः

नदी कुत्र ? तस्या लोतकं वा कुत्र ? तस्या अञ्चले उर्मिः कुत्र ? विपुलप्रपञ्चे शून्यमुदाहरति नीलिमा । अयं तु सागरः । अयं चन्द्रस्य निलयः । परमस्मिन चन्द्रिका नास्ति । अयं सूर्यस्य स्वर्गः । परमत्र प्रकाशो नास्ति । अत्र जलमस्ति । किन्तु पानीय प्रणाली नास्ति । अत्र क्रिया अस्ति । अपि तु वेगशीलता नास्ति । समतलस्वभावे गम्भीरोऽयं शब्दभरः ... ... प्रलयकलेवरः कश्चित् कालपरिवारः ...।

परन्तु तदानीं यः पोतः नदीधारे प्लवमानः अभिमुखम् आगतः स इदानीं कुत्र निह्नुतः ? पथि वा कथं विरतः ? दृष्टिः दीर्घायते । परं दृश्यं कुत्र ? नाम विवर्धते । परमाकृतेः पर्याप्तिः कुत्र ? संकेतास्तु अनेके मुखानि वा कुत्र लुप्तानि ? वचनानि तु पुष्कलानि । सन्देशः किम् ? सत्यं किम् ... कुत्र ..?

अरे ! मम माला कुत्र ? मम मातृका कुत्र ? किं सर्वं परिभ्रष्टम्- - - - - -?

—x—

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पङ्क्तिः | पृष्ठम् |
|---|---|---|---|
| उच्चपदाधीकारी | उच्चपदाधिकारी | १० | ८ |
| आवसन्तीव | आवयन्तीव | ८ | १० |
| निःश्वसिनि | नि:श्वसिति | ४ | १२ |
| शन्कुवन्ति | शक्नुवन्ति | २ | १४ |
| चत्वालानि | पल्वलानि | १९ | १४ |
| उपरिसः | उपरिस्थः | १४ | १५ |
| भार्टकीयम् | भाटकीयम् | शीर्षकम् | १६ |
| चित्यते | चिन्त्यते | १५ | १६ |
| वर्ता | वार्ता | १३ | १३ |
| वदति | वदसि | १ | १८ |
| क्वि | क्व | १४ | १८ |
| प्रकारे | प्राकारे | १६ | १८ |
| पक्षीपी | पक्षिणी | १९ | २४ |
| आसिन | आसीत् | ११ | २५ |
| नीरवदीप्ता | नीरवदीप्तः | १६ | २९ |
| धीरकरठन | धीरकण्ठेन | ११ | ३३ |

| अशुद्धम् | शुद्धम् | पङ्क्तिः | पृष्ठम् |
|---|---|---|---|
| भ्रमन्ति | भ्रमति | २ | ३८ |
| बोदण्डः | कोदण्डः | २० | ४० |
| मुद्र्या | मुद्रया | १४ | ४९ |
| स्नेहनिह्नतिः | स्नेहनिह्नुतिः | १६ | ५२ |
| कुक्कुरा | कुक्कुरं | १४ | ५६ |
| शस्त्रीणोऽपि | शास्त्रिणोऽपि | १७ | ५६ |
| नाभिलसन्ति | नाभिलषन्ति | १८ | ५६ |
| नित: | ततः | ८ | ६० |
| सद्यैव | सदेव | १६ | ६० |
| पुतमनसि | पूतमनसि | १ | ६८ |
| सा | स | ८ | ७७ |
| धवलभीवष्यन्ति | धवलीभविष्यन्ति | १४ | ७७ |
| तिदनीं | तदानीं | १४ | ८४ |
| षोडष | षोडश | १४ | ८५ |
| प्रभू | प्रभु | १२ | ८६ |
| रोग | रोगो | १० | ९० |
| पार्थिवान् | पार्थितवान् | १२ | ९० |
| अयो | आयो | ११ | ९३ |
| अभयोगोऽस्ति | अभियोगोऽस्ति | १३ | ९३ |
| भुक्ङ्त्वा | भुक्त्वा | १६ | ९४ |
| यादव | × | ७ | ९५ |
| दिक्षा | दीक्षा | १४ | ९८ |

| अशुद्धम् | शुद्धम् | पङ्क्तिः | पृष्ठम् |
|---|---|---|---|
| तरंगात् | तरंगान् | ६ | १०२ |
| प्रथमप्रणयि | प्रथमप्रणयी | १३ | १०२ |
| हृर्ष्यालुर्वा | ईर्ष्यालुर्वा | ६ | १०४ |
| स्विक्रुतिः | स्वीकृतिः | १४ | १०४ |
| स्थल | स्थूल | ९ | १०५ |
| विषिष्यते | विशिष्यते | ९ | १०६ |
| परमात्मानि | परमात्मनि | ११ | ११५ |
| परिबोषकम् | परिपोषकम् | १ | ११८ |
| संचारन्ति | संचारयन्ति | ७ | १२३ |
| आत्माघाताय | आत्मघाताय | ६ | १२७ |
| उतरि | उपरि | ४ | १२७ |
| ममधिषदि | मधिषदि | १९ | १३२ |
| कर्माथिम् | कर्माथिनाम् | ५ | १३९ |
| निशिथे | निशीथे | १० | १४० |
| संघा | संघ | १७ | १५० |
| गृहयतिः | गृहपतिः | ६ | १५६ |
| विचन्त्य | विचिन्त्य | १२ | १५६ |
| सन्त्रतयोऽपि | सन्ततयोऽपि | १८ | १५९ |
| उष्णकतत्कारः | उष्णफुत्कारः | १८ | १६९ |
| निह्लतः | निह्नुतः | १० | १७० |

# कवेः कृतयः

| | |
|---|---|
| १. प्रणयप्रदीपम् | काव्यम् |
| २. हृदयेश्वरी | ,, |
| ३. महातीर्थम् | ,, |
| ४. भिन्नपुलिनम् | ,, |
| ५. अलका | ,, |
| ६. ईशा | ,, |
| ७. निम्नपृथिवी | लघुकथासंग्रहः |
| ८. तिलोत्तमा | उपन्यासः |
| ९. मधुयानम् | ,, |
| १०. शीतलतृष्णा | ,, |
| ११. प्रतिपद् | ,, |
| १२. अरुणा | ,, |
| १३. अञ्जलिः | ,, |
| १४. आवर्त्तम् | ,, |
| १५. निकषा | ,, |
| १६. शिखा | ,, |
| १७. ऋतम् | ,, |
| १८. विसर्गः | ,, |
| १९. पताका | बालोपन्यासः |
| २०. महान् | बालकथा |
| २१. एकदा | ,, |

22. Reference : A Logico-Linguistic Identification (Research)

The author reveals his sensitivity and fondness for realistic situations throughout narrations. The language is simple, straightforward, but moving.

—THE HINDU, MADRAS.

अस्य कवेः गद्यरचना सरला, वाचकान् आनन्दतुन्दिलान् करोति ।

—सुधर्मा, मैसूर् ।

भाषाया अपूर्वा स्फीतिः अप्रस्तुतविधानस्य, नवीना परिकल्पना, जटिलंबिम्बविधानं च अस्य कवेः कवित्वसृष्टेः वैशिष्ट्यानि । आधुनिकसंस्कृतसाहित्यस्य प्रयोगक्षमत्वं नूतनतत्त्वग्रहणसामर्थ्यं च परिचाययितुमवश्यमेताः रचनाः स्वागतार्हाः ।

—सागरिका, वाराणसी ।

दाशस्य लेखनी इतोऽपि गम्भीरा गुणवती च

—